श्रीलब्धिसूरीश्वरजैनग्रन्थमालायाः सप्तमो मणिः [७].

श्रीस्याद्वादिने नमः। आत्मकमललब्धिसूरीश्वरेभ्यो नमः॥

जैनरत्नव्याख्यानवाचस्पतिकविकुलकिरीटसूरिसार्वभौमजैनाचार्यश्रीमद्विजयलब्धिसूरीश्वरविरचिता-

# श्री वैराग्यरसमञ्जरी।

जैनाचार्यश्रीमद्विजयलब्धिसूरीश्वरशीष्यरत्नकोवीदकुलकोटीरोपाध्यायप्रवरश्रीमद्भुवनविजयजीगणीवरोपदिष्टवटपद्रराज्यान्तर्गत उंढाइग्रामवास्तव्य स्वर्गस्थ श्रेष्ठिवर्यश्रीयुत् अमीचंद्रतनुज कुबेरदासार्पितार्थसाहाय्येन लब्धिसूरीश्वरजैनग्रन्थमालाकार्यवाहकेन जमनादासात्मजचन्दुलालेन प्रकाशितम्।

किंमत रु २-५०

वीर. २४६४ आत्म. ४४ प्रतीनां पंचशतम् विक्रम १९९५ सन. १९३९.

सूरिसार्वभौमजैनाचार्यश्रीमद्विजयलब्धिसूरीश्वरविरचिता

# वैराग्यरसमञ्जरी ।

प्रथमगुच्छकः ।

वासुपूज्यं नमस्कृत्य बुहारीनगरीस्थितम् । क्रियते स्वात्मबोधाय वैराग्यरसमञ्जरी ॥ १ ॥

करालकालव्याघ्रास्यगृहीताशेषजन्तुके । चञ्चलं जीवनं लोके तस्माद् याहि शिवालयम् ॥ २ ॥

सर्वकार्यं परित्यज्य ज्ञानत्रिकं सदा भज । मोक्षप्रयाणसाहाय्या सामग्री खलु दुर्लभा ॥ ३ ॥

गम्भीरनीरधौ न्यस्त-मौक्तिकप्राप्तिवज्जनुः । समीलायुगवद्वास्ति मानुष्यं समवाप्य तत् ॥ ४ ॥

ऊषरे शस्यनिष्पत्तिवदेव कल्पपादपम् । सुकुलत्वं मराविव लब्ध्वा तत्रापि दुर्लभम् ॥ ५ ॥

भाविभद्रत्वतः भव्यो भवस्थित्याः प्रपाकतः । सुगुरुवाक्यतः स्वस्मात् कर्मग्रन्थिविभेदतः ॥ ६ ॥

प्राप्नोति शासनं जैनं रोरं[1]गेहे निधानवत् । व्याधिग्रस्तनृणां वैद्य इवातिपुण्ययोगतः ॥ ७ ॥

१ रंक ।

गतागतादिकं जीवं कुर्वन्तं स्वशरीरके । श्वासच्छलेन रे चित्त ! तं त्वं जानासि किं नहि ? ॥ २२ ॥
एतत्कृतमिमं कुर्वे करिष्यामीदकं ध्रुवम् । ध्यायतो व्याकुलस्येति वासरा यान्ति निष्फलाः ॥ २३ ॥
विवाहिता सुता नास्ति पाठितो बालको न च । प्रव्रजेयं कथं भो भो ! व्यवस्थामन्तरेण हा ॥ २४ ॥
प्रभूक्ते सुंदरे मार्गे विचारोऽयं प्रवर्तते । कदर्थितः कृतान्तेन वक्तुमेवं न पार्यते ॥ २५ ॥
रे चित्त ! विविधां चिन्तां मुहुर्मुहुः करिष्यसि । भवार्णवं तदा घोरं कदापि न तरिष्यसि ॥ २६ ॥
दीनो धनी धनी राजा राजा देवः सुरस्तथा । सुरेशः सिद्धिपुर्वासी भवेयमिति वाञ्छति ॥ २७ ॥
प्रविशच्छल्यवच्चित्त ! प्रकृत्यैव व्यथाकराः । कामक्रोधादयो नित्यं सर्वेऽप्यान्तरिकारयः ॥ २८ ॥
तानुपेक्ष्य महामूढ ! बाह्यशत्रुषु धावसि । यद्भावे यदभावो न धिग् धिग्मोहविचेष्टितम् ॥ २९ ॥
मित्रतां कुरु बाह्येष्वान्तरिकेषु च शत्रुतां । साधयसि तदा कार्य–मन्यथा रिपुरात्मनः ॥ ३० ॥
मधुराः कटुका ये स्यु–रादौ चान्ते मनस्त्वया । त्याज्याः स्वयं हि गन्तारः विषयाः दुःखदायिनः ॥ ३१ ॥
सुखमिष्टेषु चेदेषु प्रथमं न विमुह्यसिं । संतापं लप्स्यसे चेत–स्तदा त्वं न कदाचन ॥ ३२ ॥
आपातं प्रेक्षसे तद्व–द्विपाकं प्रेक्षसे यदा । विषयाणां तदा चेतः ! न स्याद्विडम्बना तव ॥ ३३ ॥
एतत्पापात्मकेष्वेव दुःखदेषु रतिस्तव । । श्वभ्रे गतागतिं कुर्या न प्रयासि कदा शिवे ॥ ३४ ॥
विषयान्विषमान् ध्यात्वा संतापं प्राप्स्यसि बहु । ततस्तादृक्कुरु ध्यानं निर्वृतिः परमा यतः ॥ ३५ ॥

# प्रा....स्ता....वि....क....म्.

हंहो ! सुरभारतीप्रीतिमन्तः ! शेमुषीशेखरा ! उपस्कृतोऽयं ग्रन्थः सतां करकजयोरुपदीक्रियते ।

सर्वेषां ग्रन्थकाराणां गूढाभिप्रायः प्रायो वैराग्योत्पादकतया लोकोपकारकरणमेव, गणभृद्भिरपि चत्वारोऽनुयोगा विवर्णितास्तेषु चरणकरणानुयोगोत्पादायैव शिष्टास्त्रयोऽपि व्याख्यानप्रकाराः प्रथिताः, वैराग्याभावे क्रियमाणा क्रिया भस्मच्छन्नाग्नौ हुतिरिव विफला भवतीति सर्वेषां राद्धान्तविदां विदितप्राय एव, सम्यक्त्वस्यास्तिता वैराग्यपारावारावगाहनेप्सुमतां भव्यानामेवेति ।

वैराग्यवासितान्तःकरणचरणवद्भिः शुद्धोपयोग एव पिता, धृतिरेव जननी, शीलमेव सहोदरः, शमतैव सहचारिणी, शुभक्रियैव ज्ञातिरिति मन्यन्ते ।

अत एव जगति वैराग्यमेव सर्वभावशिखरिषु शिखरायते तदिदं वैराग्यमनन्तकालतः नवनवयोनौ बम्भ्रम्यमाणानां त्रिविधतापपरितप्तानां चेतस्विनां प्रतिदिनं संसृतेरसारतां विभावयत् विज्ञापयति च त्वं भवाटव्यामटननेकशः विचित्राभिः व्यथाभिः व्यथितः सांप्रतं जागृहि मोहमोहिनीं त्यक्त्वा त्रिकालवद्भिः तीर्थकरैरुक्तं शाश्वतानन्दधामसोपानमिव परमं साधनं चारित्रं प्रपद्यस्व यतः पञ्चमज्ञानप्राप्त्यनन्तरमेव सदेवमनुजसंसदि चतुर्विंशतितीर्थपैः ससारनिस्सारता प्रकाशिता।

यद्यपि वैराग्यभावोद्बोधका बहवो ग्रन्था अस्तितां बिभ्रति तथापि समुच्चयात्मकतयाऽस्य प्रणयनं मन्दमतिमतां प्राणिनां सौकर्येण वैराग्यभावसंपादनायैव ।

अस्य प्रबन्धस्य विधातारः पञ्चालदेशोद्धारकाणां कुमार्गपतितढुण्ढकसहस्राणां प्रबोधिदातॄणां जगद्विशदकीर्तीनां भव्यमूर्तीनां संविग्नपक्षाद्याचार्याणां श्रीमद्विजयानन्दसूरीश्वराणां पट्टपूर्वाचलप्रद्योतनानामनेकनृपतिप्रबोधकानां नैष्ठिकब्रह्मचर्य व्रतप्रपालकानां निःस्पृहचूडामणीनामिलादुर्गस्थशान्तिनाथविहारोद्धारकारकाणां श्रीमद्विजयकमलसूरीश्वराणामन्तेवासिपट्टप्रद्योतका दुर्मददुष्यद्वादि-

अस्थिस्थूणाधृते काये स्नायुबन्धनिबन्धिते । त्वचामांसवसाच्छन्ने इन्द्रियारक्षगोप्तृके ॥ १ ॥
स्वकर्मनिगडाबद्धो जीवो गुप्तिगृहोपमे । वसति तत्र चित्त ! त्वं मोहं मा मा वृथा कृथाः ॥ २ ॥ युग्मम् ॥
कोशिकारकृमेः पश्य दुःखं वेष्टयतः सतः । दुःखं भावि तवाप्येवं ममत्वसहितस्य हा ! ॥ ३ ॥
निःसारेऽत्रैव संसारे सारं सारङ्गलोचना । एवं भ्रमितचेतास्त्वं कुतस्ते निर्वृतिर्भवेत् ? ॥ ४ ॥
स्त्रीसुखं पङ्कजेनात्र पामरेणोपमीयते । स तत्र भ्रमरीभूय मृत्वा साक्षात् करोति तत् ॥ ५ ॥
वसाफुप्फुसजंबाल-स्नायुरक्तभृतं वपुः । चन्द्राद्युपमया मूढैः कथ्यते मोहचेष्टितैः ॥ ६ ॥
पुरीषमांसरक्ताद्यै-र्दुर्गन्धैः परिपूरितम् । शरीरं योषितां ज्ञात्वा तत्र किं रमसे वृथा ? ॥ ७ ॥
बडिशं स्त्रीजनं क्षिप्त्वा मनस्त्वां मकरध्वजः । शब्दादिद्रहमीनं हा ! पचति रागपावके ॥ ८ ॥
स्तोकमपि विकारं ते कुर्वन्ति नाङ्गना यदा । हसितललितादिभि-स्तदा ते परमं सुखम् ॥ ९ ॥
चित्त ! चेतसि चेत त्वं गौरीणां गात्रसागरे । लग्नास्तनगिरौ भग्ना भाविनी धर्मनौस्तव ॥ १० ॥
चित्त ! चेतसि चेत त्वं स्त्रीशरीरार्णवे तव । लोचनावर्तके लग्ना धर्मनौर्नाशमेष्यति ॥ ११ ॥
सिद्धान्तवासितचित्तानां जिनानां जगतां मतम् । इदं प्रवर्त्तनं यस्य निर्विकाराः प्ररूपकाः ॥ १२ ॥

१–गुर्जर भाषायां फेफसा इति । २ कफात्मको कर्दमः । ३ मत्स्यवेधककण्टकम् ।

वृन्दैरावणाद्यापदाः तपोगच्छगगनदिनमणि सूरिपुरन्दराः कटोसणाद्यनेकनरेशप्रतिबोधप्रसारिताऽहिंसाधर्मोर्मयः जैनरत्नव्याख्यान-वाचस्पतय आचार्यपुङ्गवश्रीमद्विजयलब्धिसूरीश्वरा यैर्गुर्जर-हिन्दी-उर्दू-संस्कृतभाषाविभूषिता अनेकग्रन्थाः विनिर्मिता भव्यानां कल्याणं कुर्वन्तः चकासति ।

एतद्ग्रन्थकर्तॄणां चरित्रावलोकनकांक्षावद्भिः कविकुलकिरीट-कमललब्धिमहोदयकाव्यादयो ग्रन्था विलोकनीयाः ।

देशविरतिधर्माराधकग्रन्थमालायाः प्रथमाङ्कतया प्राकट्यंनीतोऽयं ग्रन्थो द्वितीयावृत्तितया समुन्नीयतेऽधुना ।

इयं वैराग्यरसमञ्जरी द्विचत्वारिंशदधिकषट्शतश्लोकपरिमिता पञ्चमहाव्रतपालने दत्तसंकेतेव पञ्चगुच्छकैर्विभक्ता विलसति तेषु प्रथमगुच्छके-मानुषभवदुर्लभतामाख्याय मनो विविधवचनैरुपदिशति । द्वितीयगुच्छके पौद्गलिकपदार्थानामनित्यतां समाख्यायात्मनो विवेकं ददाति । तृतीयगुच्छके निरयक्लेशः सविस्तरो वर्णितः । चतुर्थगुच्छके सम्यग्दर्शनस्य चिन्तामणिरत्नोपमया लौकिकसर्वरत्नानां काचशकलोपमानं प्रवेद्य तत्त्वत्रयीनां प्रकृष्टत्वं प्रदर्श्याधुनिकानां विंशतिशताब्दीयानां वैमत्यं विज्ञाप्य ढुण्ढकमतं खण्डनपूर्वकमपास्य तीर्थेशानां त्रिकालार्चनकर्तव्यतायाः प्रतिपादनं कृत्वा सुधर्ममहात्म्यं वर्णयित्वा शीलतपसोः प्रौढिमां प्रकाश्य सप्रभेदं तपः प्ररूप्य द्वादशभावनायाः सविस्तरं स्वरूपं निरूप्य पिण्डस्थादिध्यानं धर्त्तव्यमित्युपदिश्य च तत्फलं कथितम् ।

पञ्चमगुच्छके सम्यक्त्वस्य सलक्षणपञ्चलिङ्गानि पृथक् पृथक् व्यावर्ण्य युक्तिपुरस्सरं वेदान्तादिदर्शनानामलीकत्वं ज्ञापयित्वा सम्यक्त्वस्य च सप्तषष्ठिभेदा निरूपिताः ।

ग्रन्थोऽयं धीदारिद्र्येन, यन्त्रतो, मुद्रणपत्रतो वा याः काश्चनाऽशुद्धयः स्युस्ता विद्वज्जनैः समुत्सृज्यावलोकनीय इत्युपरमते-

पालिनगरे
भाद्रपदसितचतुर्थ्याम्
१७-९-३९

विक्रमविजयो मुनिः ।

रूपेण सुरशैलेश-सदृशोऽपि कुकर्मकः । धिग् धिग् ते वाह्यसौन्दर्य-मन्तरे मलिनात्मक ! ॥ २६ ॥
ददत उपदेशं ते शौर्यं वचसि यद्भवेत् । तच्छौर्यं कायमनसो-र्भवेचेद्धस्तगं शिवम् ॥ २७ ॥
मुधा मूढैर्हि संसारो मथ्यते सारमिप्सुभिः । म्रक्षणं लेभिरे केऽत्र पानीयस्य विलोडनात् ॥ २८ ॥
तुषवपनवत्सारः संसारे नात्र विद्यते । गान्धर्व्वनगरीतुल्या व्यवस्था दृश्यतेऽखिला ॥ २९ ॥
मुक्त्वा त्वं सकलां चिन्ता-मेकां चिन्तां मनः ! कुरु । तां यया निर्वृतिस्थाने सुखं भुङ्क्ष्व निरन्तरम् ॥ ३० ॥
मन्त्रतन्त्रसुखैर्मूढ ! हा ! हा ! त्वमीहसे सुखम् । समाधिसेकमन्त्रं नो यावत्तावत् कथं सुखम् ? ॥ ३१ ॥
समाधिदायकं मन्त्रं नमस्कारं विमुच्य हा ! मूढा गवेषयन्त्यन्य-मन्त्रकं दुःखव्याकुलाः ॥ ३२ ॥
औद्धत्याग्निप्रदग्धा ये मानमायामृताश्च ये । रसनेन्द्रियलुब्धा ये तेषां सौख्यं कुतो भवेत् ? ॥ ३३ ॥
रहस्यशून्यहृदया आत्मभावबहिर्मुखाः । रता गालीप्रदाने च तेषां सौख्यं कुतो भवेत् ? ॥ ३४ ॥
निष्पक्षं सुगुरुमज्ञा जानन्ति पक्षपातिनम् । भुक्तधत्तूरकाः श्वेतं यथा पीतं वदन्ति हा ! ॥ ३५ ॥
माद्यसि त्वं न लक्ष्म्याश्च रागादीनां वशो नहि । योषिद्भिर्ह्रियसे नैव मुह्यसे विषयैर्नहि ॥ ३६ ॥
मुच्यसे नैव सन्तोषै-र्नेच्छयालिङ्ग्यसे यदा । पात्यसे नैव पापैश्चेत्तदा मुक्तिः प्रिया तव ॥ ३७ ॥ युग्मम् ॥
अनभिषङ्गतः सङ्ग-मप्रीतिपरिहारतः । द्वेषं मोहं च सज्ज्ञानात् क्रोधं च क्षमया तथा ॥ ३८ ॥
मानं मार्दवभावेन मायामार्जवतो जय । लोभं सन्तोषतश्चित्त ! तदा ते परमं शिवम् ॥ ३९ ॥

उत्तालीभूय चित्त ! त्वं समारुह्य च तं तरुम् । ज्ञानात्मकं फलं लाहि ततो मुक्तिरसं पिब ॥ ५४ ॥
रागादिबन्धनद्रुम-मुन्मूल्य चित्तहस्तिक ! । याहि धर्मवने येन स्यान्निर्वृतिः सुखावहा ॥ ५५ ॥
सर्वसिद्धान्तमध्ये त्वं दर्व्वीव चरसि ध्रुवम् । अन्यथा जीवनं ते किं सारहीनं विलोक्यते ? ॥ ५६ ॥
प्राग्महर्षीयचित्राणि चरित्राणि विलोकसे । चित्त ! किं प्रस्तरोऽसि यद् रसशून्यो विभाव्यसे ? ॥ ५७ ॥
सुषुप्तिसङ्गतो जीवः प्रातरुत्तिष्ठतीह तत् । महच्चित्रं विजानीया जीवनं कृत्रिमं यतः ॥ ५८ ॥
दिने नष्टे यथा रात्रौ प्रमीला प्राणिनां भवेत् । आयुष्कर्मे तथा नष्टे दीर्घनिद्रा भविष्यति ॥ ५९ ॥
पश्चात्तापो भवेद्भूरि दुःखयोनौ गते सति । तस्मात्पूर्वं प्रमादं त्वं चेतस्त्यक्त्वा सुखी भव ॥ ६० ॥
दीक्षया दैवसिक्यापि यदि मुक्तिर्न भाविनी । ध्रुवं वैमानिको देवो भव्यो भवति भावुकः ॥ ६१ ॥
यद्वैतत्स्थूलमानं स्यात् तीव्रे भावे क्षणाद्यतः । सर्वकर्मक्षयं कृत्वा मुक्तिर्याति न संशयः ॥ ६२ ॥
यदुक्तं वर्षकोट्याप्यज्ञानी कर्मक्षयं नयेत् । ज्ञानी तच्छ्वासमात्रेण क्षपयेत् कर्म दारुणम् ॥ ६३ ॥
मत्वेति मनसा सम्यग् कायेन वचसापि च । ज्ञानवृद्धिं नयन्नित्यं सुचारित्रं प्रपालय ॥ ६४ ॥

इति आत्मविवेकवर्णनात्मको द्वितीयो गुच्छकः समाप्तः ।

---

१ कडछीतिभाषायाम् ।

तस्माद्धितं विधातव्य–मात्मनो नाहितं कदा। येन चात्यंतिकं सौख्यं मोक्ष एकान्तिकं भवेत् ॥ ८ ॥ कुलकम्
प्रथमं श्रेयसोऽर्थे भो ! रुणद्धि योगमात्मनः। अनिरोधादयं हा हा ! साधयत्यशुभं न किम् ? ॥ ९ ॥
मनोमत्तः करी लोके कुमतिकरिणीयुतः। कषायकलभैर्युक्तः किं किं नोन्मूलयेद्भुवि ? ॥ १० ॥
अनिरुद्धा वचःश्रेणी महानर्थविधायिनी। निरपेक्षा भवत्येव तत्तस्याः संयमं कुरु ॥ ११ ॥
अश्रेयःपथिकः कायः तप्तायोगोलको मतः। तस्माच्छ्रेयःप्रवृत्तिभाग् कर्तव्यस्तस्य संयमः ॥ १२ ॥
शास्त्राभ्याससहायेन जीवेन क्रियते सुखम्। तन्निरोधस्ततो जीव ! शास्त्राभ्यासे रतो भव ॥ १३ ॥
यतः तत्रास्ति सद्युक्तिः मनोबोधप्रदायिका। प्रथमं दर्श्यते सात्र पश्चादन्ये गुणा अपि ॥ १४ ॥
जन्ममृत्युजराजात-वेदसा दग्धविष्टपे। ज्ञानोदधिमिहाश्रित्य मुदं याहि वरं मनः ! ॥ १५ ॥
किं चित्त ! चिन्तितैर्द्रव्यै–रस्थिरैरसुखावहैः ?। तेभ्यस्तृष्णाशमस्ते न तत्संतोषरसं पिब ॥ १६ ॥
चित्त ! भवस्वरूपं त्वं चिन्तयस्व विरूपकम्। इन्द्रजालसमं सर्वं यदि सौख्यं समीहसे ॥ १७ ॥
मित्रद्विषां यदा तुल्या प्रवृत्तिस्तव मानस !। अनर्गलं सुखं तर्हि लप्स्यसे त्वं न संशयः ॥ १८ ॥
देवनारकयोस्तुल्यं दुःखे सुखे मणौ तृणे। लोष्ठकाञ्चनयोश्चित्त ! तदा ते परमं सुखम् ॥ १९ ॥
दुर्वारमरणं चित्त ! प्रत्यासन्नं दिने दिने। चिन्तनीयं त्वया शेष–विकल्पजालकैः किमु ? ॥ २० ॥
जन्ममृत्युजरारोग–शोकादिनिवहो मनः !। यत्र प्रवर्तते तत्र वैराग्यं वहसे न किम् ? ॥ २१ ॥

स्वकीयां कल्पनां मूढो मन्यते तत्त्वधारिणीम् । पूर्वीयाणां तथा नैव कुकर्मप्रहतो जडः ॥ १७ ॥
स सम्यक्त्वं समुदाल्य कुतर्कभ्रान्तचित्तकः । स्वकीयकल्पनाकाचं हा ! हा ! रक्षति यत्नतः ॥ १८ ॥
अधुना पञ्चमे काले विशेषाः कृष्णपाक्षिकाः । भाविनो भरते सव्ये इत्यस्ति पूर्वभाषितम् ॥ १९ ॥
प्रत्यक्षं लक्ष्यते तत्तु तेषां दुर्भाग्ययोगतः । उन्नतिर्दुर्गतिगानां चेतस्तुदति धर्मिणाम् ॥ २० ॥
विंशत्तमशताब्द्यां हा ! जज्ञिरे-ईदृशा जनाः । सावधानं मनस्कृत्वा निजं रक्षत रक्षत ॥ २१ ॥
मिथ्यात्वपोषका मूर्खैः कथ्यन्ते धर्मधारिणः । ये धर्मधारिणो लोके तान् वदन्ति विघातिनः ॥ २२ ॥
ये सम्यक्त्वव्रतस्थाः स्युः तैः सम्मिल्य प्रयत्नतः । शास्त्रविरोधिनां रोधः कार्यः स्वेषां विवर्धनम् ॥ २३ ॥
सुधर्माद् भ्रश्यतो लोकान् ये रक्षन्ति कृपालवः । धन्यास्ते कृतपुण्यास्ते तानन्वहं नमाम्यहम् ॥ २४ ॥
तीर्थेशानां त्रिकालार्चा कर्तव्या स्वर्गदायिका । बोधिसौलभ्यलाभाय बोधिर्दुर्गतिवारकः ॥ २५ ॥
संसारनीरधौ पूजा यानपात्रसमा मता । शिवप्रदीपिका पूजा वज्रं दारिद्र्यभूभृताम् ॥ २६ ॥
सर्वकल्याणकर्त्री स्याद् नृसुरीवैभवप्रदा । दुःखाग्नौ पयसां धारा प्रभोः पूजा सुदुर्लभा ॥ २७ ॥
स्नपयन्ति जगन्नाथं तत्कर्मरजसां शमः । ये पूजयन्ति तत्पादौ पूज्यन्ते जगतां जनैः ॥ २८ ॥
ये वन्दन्ते च ते वन्द्या ध्येया ध्यायन्ति तीर्थपान् । गेया गायन्ति ये स्तोत्रै-र्भवन्ति खलु भावुकाः ॥ २९ ॥
निजं मौलिं नमस्कृत्य तीर्थेशं सफलीकुरु । तद्गुणाकर्णतः कर्णौ रसनां गुणगानतः ॥ ३० ॥

किं तस्यापि प्रभावो न तस्मात् त्यागो विधीयते?। हस्तिदन्ता हि भिन्नाः स्यु–श्रवणे दर्शने तथा ॥ ४२ ॥
॥ युग्मम् ॥

दूरदर्शकयन्त्रस्य जडस्य शक्तिरद्भुता । यद् दूरस्थितवस्तूनां बोधेऽसाधारणं मतम् ॥ ४३ ॥
ऋषभाद् वर्धमानान्तं नामापि स्याज्जडात्मकम् । ढूण्ढकैर्गृह्यते यावत् तावन्मूर्त्याः प्रयोजनम् ॥ युग्मम् ॥ ४४ ॥
स्त्रीचित्रां वसतिं मुक्त्वा मुनिर्वासं दधाति च । इति राद्धान्तप्रोक्तं यत् तद्धि मूर्त्याः प्रसाधकम् ॥ ४५ ॥
ॐकारं वैदिका याव–ज्जपन्ति मूर्तिबोधकम् । तावत् तत्खण्डनं तेषां पादखण्डनवद् भवेत् ॥ ४६ ॥
चेतसीति विचार्य त्वं प्रभुपूजापरो भव । येन त्वां बाधते नैव मिथ्यामार्गः कदाचन ॥ ४७ ॥
गुरूणां वन्दनं कार्यं सर्वदा कर्मवारकम् । व्रतस्थानां यतस्तेभ्यो व्रतलाभो भविष्यति ॥ ४८ ॥
अज्ञानं नाशयेल्लोके आगमार्थं प्रबोधयेत् । यो हि मार्गप्रदाता स्यात् स गुरुः सेव्यतां सदा ॥ ४९ ॥
पिता माता तथा भ्राता भगिन्यादि कुटुम्बकम् । न रक्षेत् पततो जीवान् कृपालुं सुगुरुं विना ॥ ५० ॥
सुगुरूदितवाक्येभ्यो यथा बोधः प्रजायते । न तथा कुगुरुभ्योऽस्ति यतस्ते दूषिताः स्वयम् ॥ ५१ ॥
ये स्वयं ब्रुडिताः सन्ति तारयेयु र्न ते परान् । गुडभोजिगुरोरत्र दृष्टान्तः सिद्धिकारकः ॥ ५२ ॥
जिनानां शासनं लोकेऽद्यावधिं यद् विलोक्यते । गुरूणामुपकारोऽयं पञ्चमान्तं प्रयास्यति ॥ ५३ ॥
अतिमुक्तं नयेन्मुक्तिं गौतमं को गुरुं विना ? । गौतमं मानिनं मुक्तिं विना वीरं नयेच्चकः ? ॥ ५४ ॥

शीर्णे कामशरेणैव मनःकुम्भ ! त्वयि कथम् । आत्मनैर्मल्यदं स्थेयात्सर्वज्ञवचनामृतम् ॥ ३६ ॥
मथितोऽनेकशो दुःखै रे रे हृदयसागर ! । तथापि निर्गतं नैव विवेकामृतरत्नकं ॥ ३७ ॥
विषं यन्निर्गतं त्वत्तः तत्तु व्याप्तं जगत्त्रये । येनाकुलं जगत्सर्वं प्रत्यक्षेण विलोक्यते ॥ ३८ ॥
संयोगे क्षणिकं सौख्यं वियोगेऽनन्तवेदनाः । विषया हा ! ददत्येव तस्मात्त्याज्या विवेकतः ॥ ३९ ॥
दानेन तपसा किं वा बाह्यकष्टेन किं तव । पठितेनापि किं भूयादात्मपथ्यं न चेतसि ॥ ४० ॥
भोगाद्विरम चेतस्त्वं वैराग्ये तु रमस्व भोः ! । एतत् पथ्यं धृतं चेत्स्यात् क्रियाकष्टैरलं तव ॥ ४१ ॥
बहुच्छिद्रं गृहं कृत्वा चारुचन्दनकाष्ठकैः । फणिस्थानसमीपे वै पुष्पशय्यां विधाय च ॥ ४२ ॥
निद्रामिच्छति यद्वत्क-स्तद्वद्विषयरागतः । मुक्त्वा विरक्तभावं हा ! मूढ ! सौख्यं समीहसे ॥ ४३ ॥
ऐश्वर्यमीहसे चेत्त्वं सर्वदैव सुखप्रदम् । धारय त्वं तदा स्वस्मिन् ज्ञानरत्नं सुखाकरम् ॥ ४४ ॥
द्रव्यादीनां ग्रहं त्यक्त्वा त्वं संवेगमनुसर । आमूलचूलतो येन त्रुट्येत्ते भवसन्ततिः ॥ ४५ ॥
सक्लेशैर्विभवैः किं ते कामितैर्विफलैर्भवेत् । सन्तोषमाशये धेहि लाहि च परमं सुखम् ॥ ४६ ॥
अर्जने यस्य क्लेशोऽस्ति अर्जितस्यापि रक्षणे । मोहो नाशे च सन्तापः स्वं प्रकृत्यैव दुःखदम् ॥ ४७ ॥
कुगतिवर्त्मदे तस्मिन् राजाग्निचौरग्राह्यके । तत्त्वचिन्तनतश्चित्त ! त्यजैतस्य परिग्रहम् ॥ ४८ ॥

इति मनःप्रबोधवर्णनात्मकप्रथमो गुच्छकः समाप्तः ।

अङ्कुराच्च यथा बीज-मदृष्टमपि सिद्ध्यति । सुखदुःखात्तथा धर्माधर्मौ प्राच्यौ प्रसिद्ध्यतः ॥ ६९ ॥
धर्मात्कठोरकर्मापि स्वस्मिन् तत्त्वं दधाति च । स्वस्थानं क्रियते किं न शिलायामपि मृद्घटैः ? ॥ ७० ॥
निम्नोर्ध्वं याति जीवोऽत्र शुभाशुभैः स्वकर्मभिः । दृष्टान्ते योजनीयौ हि कूपप्रासादकारिणौ ॥ ७१ ॥
सुकलत्रे सुते राज्ये प्राप्तेऽथ रत्नसंचये । स्वर्गसौख्ये तथा प्राप्ते न सन्तोषो महात्मनाम् ॥ ७२ ॥ युग्मम् ॥
स्वल्पकालस्थितींस्तुच्छान् शून्यां स्तान्परमार्थतः।ज्ञात्वाऽर्थान् बुद्धिमान् कोऽत्र तेषु सन्तोषभाग् भवेत् ७३
श्रीजैनं शासनं प्राप्य दुःखभीष्मे भवोदधौ । प्राज्ञाः पोतायमानं हि नृत्यन्ति हर्षनिर्भराः ॥ ७४ ॥
यतो मार्गः क्षणादेव श्रीसर्वज्ञप्ररूपितः । शमामृतरसास्वादं ददाति भाग्यशालिने ॥ ७५ ॥
अनन्तसुखदं मोक्षं जीवं नयति निश्चितम् । हर्षोद्रेकस्य किं नैव कारणं स प्रजायते ? ॥ ७६ ॥
भाग्यानुकारं वाञ्छन्ति फलं सर्वेऽपि देहिनः । श्वा तुष्टः खण्डमात्रेण केसरी न तथा भवेत् ॥ ७७ ॥
व्रीहिकणमपि प्राप्य मूषकः खलु नृत्यति । गजेन्द्रोऽवज्ञया भुङ्क्ते पुष्कलेऽपि सुभोजने ॥ ७८ ॥
अदृष्टतत्त्वकामूढाः तुच्छचित्ता मनागपि । राज्यादिलाभमाप्यात्र जायन्ते ते मदोद्धुराः ॥ ७९ ॥
दृष्टजिनोक्ततत्त्वा ये सम्यक्त्वशालिनो जनाः । धर्मभावरता नैवं भवन्ति मदविह्वलाः ॥ ८० ॥
येन देशनया नीताः श्रीजैनं वरशासनम् । उपकारी सम स्तेन न कोऽपि जगतीतले ॥ ८१ ॥
उपकारशतैरत्र भवकोटिशतैरपि । धर्मोपदेशदातॄणां निष्क्रयो न विधीयते ॥ ८२ ॥

धर्मशब्दे समानेऽपि लोकलोकोत्तरागमे । अन्तोऽत्यन्तविभेदोऽस्ति यथा दुग्धे स्नुहीगवोः ॥ ९६ ॥
सर्वमेकान्तिकं पुष्यात् दर्शनं मोहमोहितं । मोहनिर्मुक्तजैनेन्द्रं वस्तुस्थित्या यथास्थितम् ॥ ९७ ॥
अनेकान्तं यतस्तेन विग्रहवर्जितं मनः । रागद्वेषविनिर्मुक्तं प्राप्नोति परमं सुखम् ॥ ९८ ॥ युग्मम् ॥
अहंकारविनिर्मुक्तं निःसङ्गं निर्मलं तथा । एकान्तिकहठत्यागात् प्राप्नोति परमं सुखम् ॥ ९९ ॥
सर्वतो निस्पृहीभूय मिथ्याभ्रान्तिमपास्य च । शुद्धतत्त्वे विलीनं च प्राप्नोति परमं सुखम् ॥ १०० ॥
जिनेशचरणे रक्तं समं मानापमानयोः । सद्धर्मध्यानतो चेतः प्राप्नोति परमं सुखम् ॥ १०१ ॥
तत्त्वज्ञानदृशा दृष्टे शब्दादिविषयेऽखिले । समीभूय शुभं चित्तं प्राप्नोति परमं सुखम् ॥ १०२ ॥
जिनेन्द्रवासितं चित्तं पूजाहिंसाप्रलग्नयोः । समं शमरसे लीनं प्राप्नोति परमं सुखम् ॥ १०३ ॥
प्रभुत्यक्तपदार्थेषु तद्धर्मपूर्णवासितम् । निर्लिप्तभावनाव्याप्तं प्राप्नोति परमं सुखम् ॥ १०४ ॥
निर्विकारिजिनध्यानात् मनोहारिषु वस्तुषु । रामादिषु समीभूय प्राप्नोति परमं सुखम् ॥ १०५ ॥
मैत्रीप्रमोदकारुण्य-माध्यस्थ्यवासितं मनः । प्रभोश्चरित्रमालोच्य प्राप्नोति परमं सुखम् ॥ १०६ ॥
अष्टकर्मविनिर्मुक्तं प्रभोः पादप्रसादतः । कर्मविकल्पतो मुक्तं प्राप्नोति परमं सुखम् ॥ १०७ ॥
एवं विशुद्धधर्मेण चित्तं भवति निर्मलम् । सर्वदुःखविनिर्मुक्तं प्राप्नोति परमं सुखम् ॥ १०८ ॥
सोऽपि चतुर्विधः प्रोक्तो विरागिभिर्जिनेश्वरैः । दानशीलतपोभावै-र्द्रागुद्धारकरो नृणाम् ॥ १०९ ॥

स्वस्य देहेऽपि जीवस्य संयोगो नहि शाश्वतः । तदन्येषां कथं भावी तस्मान्मोहं परित्यज ॥ १३ ॥
योगायोगाश्च[1] जीवानां पानीय बुद्बुदा इव । जायन्ते क्षणतो लोके नश्यन्ति क्षणमात्रतः ॥ १४ ॥
प्रकृतिचपलाः प्राणा-स्तिष्ठन्ति महदद्भुतम् । नह्युद्योतः क्षणादूर्ध्वं विद्युतः क्वापि दृश्यते ॥ १५ ॥
यावज्जन्मसहस्रं स्या-द्वियोगः सौजनस्तव । संयोगः स्वल्पकालीनो मूढ ! किं तं समीहसे ॥ १६ ॥
आपातमात्रतो रम्यान् हृदय ! प्रियसङ्गमान् । दारुणान् परिणामे तान् मिष्टविषमिव त्यज ॥ १७ ॥
तपःसन्तोषयोर्मग्ने दयाम्भसि सदा स्थिते । मनसि स्थीयते धर्मो दूरीकृतकुमार्गकः ॥ १८ ॥
सन्तोषामृतमग्नस्य सुखं यत्ते प्रजायते । तत्कुतश्चिन्तनासक्त-स्यासन्तुष्टस्य मानस ! ॥ १९ ॥
उदारत्वं गुरुत्वं च सौभाग्यं च तदेव हि । सा कीर्तिस्तत्सुखं चेत-स्त्वं सन्तोषेऽसि तत्परम् ॥ २० ॥
सन्तोषतत्परे चित्त ! संपदा सर्वदा तव । अन्यथा चक्रिदेवत्वे सत्यपि दुःखी सर्वथा ॥ २१ ॥
अर्थी दीनत्वमाप्नोति भयगर्वौ धृतार्थकः । शोकं नष्टार्थको लोके निराशं तिष्ठ रे मनः ! ॥ २२ ॥
अर्थित्वेन समं सार आन्तरिको विनश्यति । अन्यथा तदवस्थेऽपि लघुत्वं जायते कथम् ? ॥ २३ ॥
दूयसे दुःखतो नित्यं सदा सौख्यं समीहसे । तां क्रियां न करोष्येवा-वाप्यते च यया सुखम् ॥ २४ ॥
कर्मणि दुष्टचंडालो व्याख्यायां गौतमायसे । शोचसि नैव मूढेति भाविनी का गतिर्मम ? ॥ २५ ।

१ संयोगवियोगाः ।

केषाञ्चित्पुण्यहीनानां वेश्यादिषु व्ययो भवेत्। सुपात्रे भाग्ययुक्तानां स्वद्रव्यस्य व्ययो भवेत्॥ १२३ ॥
दुःखितदीनहीनेषु दरिद्रदुर्बलेषु यत्। दयाभावेन दीयेता-नुकम्पादानमुच्यते ॥ १२४ ॥
मोक्षदाने भवेद्भव्य ! पात्रापात्रविचारणा। दयया दीयते यत्तु सर्वज्ञै र्न निषिध्यते ॥ १२५ ॥
दोषदुष्टेऽपि जीवेऽपि दयां कुर्युर्दयालवः। संहरेन्न निजां ज्योत्स्नां चन्द्रश्चण्डालवेश्मतः ॥ १२६ ॥
क्षाराब्धौ वर्षणेऽप्यम्भो मुक्तात्वं भजते क्वचित्। सर्वेभ्यो ददतोऽप्येवं पात्रयोगः क्वचिद्भवेत्॥ १२७ ॥
दयाभावसमुत्पन्ने पात्रापात्रौ न शोचति। देवदूष्यं महावीरो ददौ विप्राय दुःखिने ॥ १२८ ॥
कुपात्रेऽपि सुपात्रोऽत्र दयां कुर्याद्विशेषतः। दशन्तं दंदशूकं किं बोधयामास न प्रभुः ? ॥ १२९ ॥
दययाऽदायि किं नैव सूरिणार्यसुहस्तिना ?। रंकाय साधवो वेषो भोजनायोपकारिणा ॥ १३० ॥
दशा वित्तस्य तिस्रः स्यु-र्दानभोगविपत्तयः। दानरूपा प्रधाना स्याद् यतो द्वे दुःखदायिके ॥ १३१ ॥
दानं देयं सति द्रव्ये सञ्चयो न सुखावहः। मक्षिकासञ्चितं पश्य हरन्ति पामरा मधु ॥ १३२ ॥
विश्राणं सौख्यकारी स्यात् केवलं सञ्चयो नहि। भुक्तानां सञ्चयै पश्य दशा भवति कीदृशी ? ॥ १३३ ॥
शीलं विघ्नहरं सर्व-सम्पदां दायकं मतम्। प्राणाधारं सुवृत्तस्य वंशशोभाविवर्धकम् ॥ १३४ ॥
ये शीलशीलिता लोके दुःखशल्यैर्न कीलिताः। सुप्राप्तशुभसंयोगा निरोगास्ते भवन्ति हि ॥ १३५ ॥
भूतव्यन्तरमुष्ट्यादि-प्रयोगा निष्फलाः समे। प्रयुक्ताः शीलयुक्तेषु शीलाद् दुःखं प्रणश्यति ॥ १३६ ॥

संसारस्य गतिर्गूढा युवा स्वरूपगर्वितः । मृत्वा स्वदेहकीटेषु कीटो भवति कश्चन ॥ २०७ ॥
हा ! हा ! कष्टं महाकष्टं बलिष्ठा कर्मसन्ततिः । येन विशारदो मर्त्यो मृत्वैकाक्षेषु जायते ॥ २०८ ॥
मूकोऽन्धो बधिरो जीवो रसनेन्द्रियवर्जितः । भ्रमत्यनन्तसंसारे द्वीन्द्रियत्वं लभेत न ॥ २०९ ॥
माता मृत्वा भवेत् पत्नी पत्नी माता प्रजायते । स्नुषा स्वसा पिता पुत्रः पुत्रः पितृत्वमाप्नुयात् ॥ २१० ॥
बन्धुराप्नोति शत्रुत्वं शत्रुर्बान्धवतां व्रजेत् । स्वजनोऽपि परो लोके परः स्वाजन्यमाप्नुयात् ॥ २११ ॥
कुन्थुर्मृत्वा करी लोके करी कुन्थुः प्रजायते । नरः स्त्रीत्वं भजेत् योषित् क्लीबत्वं च प्रपद्यते ॥ २१२ ॥
अपूर्वं नास्ति तज्जन्म देहोऽपि यो धृतो नहि । न च मुक्तोऽत्र जीवेन भ्रमता हा ! भवाटवौ ॥ २१३ ॥
कुत्रचिन्मधुरं गीतं गीतं सप्रियया यया । विलपितं तथा प्रियमुक्तया हा ! मुहुर्मुहुः ॥ २१४ ॥
अज्ञानं हा ! महत्कष्टं तस्मात्कष्टतरं नहि । संसारसागरं घोरं येनावृतोऽवगाहते ॥ २१५ ॥
कर्मचक्रे भ्रमन्नात्मा संप्राप्येव सुरालयम् । रन्त्वा प्राघूर्णकस्तत्रा–यात्यत्र प्राणजालयम्[1] ॥ २१६ ॥
गत्यादिजलगम्भीरः संसारोऽयं महोदधिः । दुस्तरो जीवपाठीना[2] भ्रमन्ति यत्र दुःखिनः ॥ २१७ ॥
दुःखदावानले प्राणिन् ! भवे कास्ति रतिस्तव । मूढापास्य भवप्रीतिं जैनधर्मे रतो भव ॥ २१८ ॥
कदा रोगैर्युतो जातः कदा भोगेन व्याकुलः । कदा देवः कदा तिर्यग् कदा च नरनारकौ ॥ २१९ ॥

१—प्राणजश्चण्डालः । २—मत्स्यविशेषाः ।

असंयमेऽरतिं चेत्त्वं संयमे सुरतिं तथा। भवाद्भयं विधत्से चे-त्पापमार्गं जुगुप्ससे ॥ ४० ॥
प्रतिकूलानुकूलेषु हर्षशोकौ विमुञ्चसि। जिनेशचरणे चित्त! भक्तिभावं दधासि च ॥ ४१ ॥
तच्छासनसमं लोके धन्यमन्यं न मन्यसे। तदा प्रसादाच्चेतस्ते करस्था निर्वृतिर्मम ॥ ४२ ॥ विशेषकम् ॥
नियम्य निजमात्मानं रागद्वेषविनिग्रहः। विहितो नैव ध्यानाग्निर्दग्धकर्मापि नाभवत् ॥ ४३ ॥
न तथा विषयास्त्यक्ता मानसं न वशीकृतम्। ततः किमीहसे मूढ! मुक्तिसौख्यं पुनः पुनः ॥ ४४ ॥
गृह्णन् मेघैः प्रविशद्भि-र्नदीनीरैश्च नीरधिः। न चोत्कर्षापकर्षौ स भजत्यत्र कदाचन ॥ ४५ ॥
एवं भोगोपभोगैर्न चित्तोत्कर्षापकर्षकौ। भजसे त्वं समत्वेन भावी रत्नाकरस्तदा ॥ ४६ ॥ युगमम् ॥
प्रकृत्या चपलानश्वान् पञ्चेन्द्रियस्वरूपकान्। विवेकरज्जुना चेतः! सुखार्थी चेद् वशीकुरु ॥ ४७ ॥
शुभध्यानबलाच्छत्रू रागादिश्चेद्विहन्यते। तदा त्रिभुवने चेतः! सर्वथा विजयस्तव ॥ ४८ ॥
संप्राप्तसर्वप्राप्तव्य-संयमः पुण्ययोगतः। तथापि विषयाशंसा मुनिस्त्वं नैव भूतले ॥ ४९ ॥
सज्ज्ञानयानपात्रं चेन् मुञ्चसि न कदाचन। न ह्रियसे तदा चेतः! योषित्सरित्प्रवाहतः ॥ ५० ॥
जीवे सुपात्रभूते च मोहवर्तियुते तथा। स्नेहं निष्ठां नयन् दीपो मिथ्यातमोविनाशकः ॥ ५१ ॥
गेहस्येव त्वदन्तश्चेज् ज्ञानात्मा प्रकटीभवेत्। तदा सर्वं हि पर्याप्तं मन्यस्व मम मानस! ॥ ५२ ॥ युग्मम् ॥
गुरुगिरितटोद्भुतं भववैराग्यस्कन्धकं। धर्मार्थिपक्षिभी रुद्धं तत्त्वरूपं परं तरुम् ॥ ५३ ॥

यथा वारांनिधौ क्षारे वस्तु क्षारत्वमाप्नुयात् । तद्वद्धि पतितं काये निर्मलं समलं भवेत् ॥ २६० ॥
स कायो हा कथं शुच्याः स्थानं भवति भावुक ! । नवद्वाराणि यस्यात्र स्रवन्ति मलमुल्बणम् ॥ २६१ ॥
मांसशिरावसास्नायु–कीकस मलपूरिते । नारीणामीदृशे देहे भ्रान्तास्ते कवयोऽखिलाः ॥ २६२ ॥
द्वाराणि द्वादशासां स्युर्वहन्ति मलमन्वहम् । ग्रामसारणितुल्यानि त्यक्त्वा मोहं व्रतं कुरु ॥ २६३ ॥
सौरभ्यशालिनो भुक्ताः पदार्थाः क्षणमात्रतः । अशुचिभावतामापु–स्तं कायं को वदेच्छुचिम् ? ॥ २६४ ॥
अशुचिकायतो भो भोः ! शुचि धर्म समाचर । पङ्केरुहं यथा पङ्कं त्यक्त्वा निर्मलतां मजेत् ॥ २६५ ॥
अशुचिभावना जीव–मेवं धर्मशुचिप्रदा । बोधयेन्नैकयुक्तिभि–र्योजयेत् क्षणतः शिवम् ॥ २६६ ॥
कासारो वारिमार्गैः स्याज्जलप्राचुर्यधारकः । आश्रवौघैश्च जीवोऽयं कर्मराशिं तथाऽऽप्नुयात् ॥ २६७ ॥
कर्मराशिप्रभावेण दुःखं त्वं प्राप्स्यसे बहु । बन्धहेतून्समस्तान्तान्निरुध्य कुरु पालिकाम् ॥ २६८ ॥
पञ्चाऽव्रतानि पञ्चैवेन्द्रियाणि च कषायकाः । चत्वारश्च त्रयो योगा इमे सप्तदशाश्रवाः ॥ २६९ ॥
कायिक्यादिक्रियायुक्ता नेत्रयुगमिता इमे । दूरीकार्यास्त्वया लोकेऽगणितदुःखदायकाः ॥ २७० ॥
मैत्रीभावेन सर्वेषु गुणिषु च प्रमोदतः । माध्यस्थ्येनाऽविनीतेषु कृपया क्लेशितेषु च ॥ २७१ ॥
मनसा वासितेनैव केचन पुण्यशालिनः । प्राप्नुवन्ति शुभं कर्म नेत्रयुगप्रकारकम् ॥ २७२ ॥ युग्मम् ॥

१–अस्थीत्यर्थः । २–४२ ।

वैपरीत्येन यत्कुर्या–दकामा सा निगद्यते । आद्या मुक्तिप्रदाऽन्या तु लौकिकं शर्म यच्छति ॥ २८७ ॥
भावनेयं हि भव्यानां योजयेत्तपसि ध्रुवम् । चेतांसि पुण्यपूतानां कर्मकन्दप्रभेदिका ॥ २८८ ॥
जम्बूद्वीपोऽत्र सर्वेषां द्वीपानां मध्यगो मतः । तिर्यग्लोके तमावेष्ट्य लवणाब्धिर्बहिः स्थितः ॥ २८९ ॥
धातकी तं तथावेष्ट्य द्वीपस्तिष्ठति तं तथा । वेष्ट्वाकालोदधिरास्ते द्वीपोऽस्ति पुष्करस्ततः ॥ २९० ॥
असंख्या सन्ति ते लोके ह्येवं द्वीपाब्धयो मताः । ऊर्ध्वलोकेऽप्यसंख्या ते विमानानि च स्वर्गिणाम् ॥ २९१ ॥
अधोलोकेऽप्यसंख्या स्ते भुवननरकालयाः । ज्योतिर्धामानि तिर्यक्षु तेषां संख्या न विद्यते ॥ २९२ ॥
एवं भवे विशालेऽत्र जीवो जातो मृतो नहि । यत्र सोऽत्र प्रदेशो न मनुष्याकृतिधारके ॥ २९३ ॥
तस्माद्धर्म गृहीत्वा त्व-मनाद्यनन्तकं जगत् । अनादिसान्तकं कुर्याः स्वस्मिन्मुक्तिसवाप्य भोः ! ॥ २९४ ॥
एवं ज्ञापयतीयं त्वां चेतो ! लाभप्रदायिका । भावना भवसन्तत्या वल्ल्या नाशे कुठारिका ॥ २९५ ॥
सर्वरत्नान्महद्रत्नं बोधिरत्नं प्रकीर्तितम् । जिनेशै रक्षणीयं तत् प्राणैः कण्ठगतैरपि ॥ २९६ ॥
एकेन्द्रियादिजीवेषु बोधिविहीनयोनिषु । दुर्लभं बोधिबीजं स्या–त्तस्माद्बोधिं सदा भज ॥ २९७ ॥
नारकाणां कथं बोधि-रुपदेष्टुरभावतः ? । तिरश्चां दुःखदग्धानां बोधिलाभोऽस्ति दुर्लभः ॥ २९८ ॥
अनार्यबर्बरादिषु देशेष्वपि कुतो भवेत् ? । धर्मभावो मनुष्याणां दयाविमुक्तचेतसाम् ॥ २९९ ॥
आर्यदेशेष्वपि मूका अन्धा रोगार्त्तदेहिनः । बधिरा बोधिलाभं हा ! प्राप्नुवन्ति न केचन ॥ ३०० ॥

तृतीयगुच्छकः ।

कदाचिद्रागरक्तं च कदाचिद्द्वेषव्याकुलम् । कदाचिन्मोहमूढं हा ! कदाचित्क्रोधतापितम् ॥ १ ॥
मानमायाविकारेण मोहलोभवशीकृतम् । चित्तमुपार्जयत्थेवं हहात्र भूरिपातकम् ॥ २ ॥ युग्मम् ॥
गत्वा तु नरके रे ! रे ! परमाधार्मिकैः कृतम् । यद्यद्दुःखं त्वया सोढं वदितुं तन्न पार्यते ॥ ३ ॥
तथापि वर्णिकामात्रं कथ्यते शृणु भावुक ! । श्रुत्वा संगृह्य चारित्रं भव स्वर्गापवर्गभाक् ॥ ४ ॥
तत्रोत्पन्ने त्वयि भ्रातः ! महाकाया भयङ्कराः ! आविर्भूता महाक्रूराः परमाधार्मिकाऽसुराः ॥ ५ ॥
कर्त्तर्याकर्त्तयन्तस्ते गात्रं ते रसतः सतः । हसन्ति निर्दया अङ्गं कुर्वन्तः खण्डखण्डशः ॥ ६ ॥
तथापि पारदस्थित्या मिलिते जीव ! गात्रके । धावन्तं त्वां ग्रहीत्वा द्राग् पातयन्ति भुवस्तले ॥ ७ ॥
तीव्रज्वलितज्वालाया-मनिच्छन्तं हठाद्धि ते । प्रक्षिप्त्वा वज्रकुम्भ्यां त्वां पचन्ति दुःखदायिनः ॥ ८ ॥
तृपातुरो रुदन्नात्थ तान् भो ! भो ! मातरो मम । पितरो भ्रातरो यूयं दुःखाद् रक्षत रक्षत ॥ ९ ॥
पाययत जलं शीत-मिति दीनवचो यदा । श्रुतं तैर्मधुरैर्वाक्यैः प्रोक्ताः समीपगास्तदा ॥ १० ॥
आकृष्य वज्रकुम्भीतः सलिलं शीतलं तथा । अर्पयत वराकं तत्तथेति प्रतिपद्यते ॥ ११ ॥ युग्मम् ॥
तप्तताम्रत्रपू क्षिप्त्वा भाजने पाययन्ति ते। सन्दंशकेन सन्धृत्य मुखं व्यादाय पापिनः ॥ १२ ॥
असह्योष्णतया दग्धो नेत्रे निमील्य मूर्च्छितः । पतितो धरणीपीठे कालादायातचेतनः ॥ १३ ॥

चिन्तामणौ घरट्टे च प्रस्तरत्वे समेऽपि भोः ! । यथान्तरं महत्तद्वद्विद्धि काञ्चनलोष्ठयोः ॥ ३१५ ॥
एवं वै धर्मशब्देऽपि समाने महदन्तरम् । सुपरीक्ष्य ततो ग्राह्यो धर्मो विद्याविचक्षणैः ॥ ३१६ ॥
यो रीरीं[1] काञ्चनं मत्वा गृहीत्वा विक्रीणाति च । ज्ञात्वा परमार्थतः कूटं रोरूयते मुहुर्मुहुः ॥ ३१७ ॥
कनकं यो कलित्वात्र कपछेदप्रतापतः । गृह्णाति वञ्च्यते नैव ह्येवं धर्मविशारदः ॥ ३१८ ॥
दृश्यन्ते दानिनः शूरा विद्वांसो रूपभाजिनः । परमार्थग्रहे नित्य-मुद्यता विरला नराः ॥ ३१९ ॥
द्वासप्ततिकला विज्ञाः स्वर्णरत्नपरीक्षकाः । सामर्थ्यविहीनास्तेऽपि सन्ति धर्मपरीक्षणे ॥ ३२० ॥
धन्यास्ते कृतपुण्यास्ते लब्धं यैर्भवसागरे । बोधिरत्नं महानर्घ्यं शिवसंपत्प्रदायकम् ॥ ३२१ ॥
पदार्था लौकिका प्राप्ता भ्रमतानेकशो भवे । न प्राप्तो वीतरागोक्त-धर्मो जीवेन भावतः ॥ ३२२ ॥
अप्राप्स्यद्यदि धर्मं स तदाप्स्यन्न कथं शिवम् ? । एवं विचारतो जीवे प्रागभावः प्रसिध्यति ॥ ३२३ ॥
अधुना दुर्लभं प्राप्तं तद्रत्नं पुण्ययोगतः । मा हार्षीर्मूढभावेन शास्त्रविरुद्धवर्तनैः ॥ ३२४ ॥
बोधिसंरक्षणे ध्याना-कर्षणं पापमर्षणम् । भावनेयं करोति द्राग् ततोऽस्यां त्वं रतो भव ॥ ३२५ ॥
अष्टभिर्दशभिर्मुक्तो दूषणैः स जिनो मतः । यथार्थतत्त्वमाख्याता दुर्लभः परमेश्वरः ॥ ३२६ ॥
यतो मिथ्यान्धकारैः स मिथ्यादृष्टिसुविस्तृतैः । अन्तरितः सदास्तेऽत्र हृत्प्रकाशेन लक्ष्यते ॥ ३२७ ॥

१ पित्तलम् ।

ईहसेऽसिवनं त्वं तद्गात्रच्छेदनकारकम् । शिशिरत्वभ्रमात्ते त्वां नयन्ति तत्र दुःखदाः ॥ १४ ॥
च्छिद्यन्ते हस्तपादादि-गात्राणि तरुपत्रकैः । तीक्ष्णखड्गोपमैस्तत्र रोदिसि करुणस्वरम् ॥ १५ ॥
वैतरण्यां तरङ्गिण्यां, प्रक्षिप्तेकर्मिशार्दूलैः । व्याकुलीभूय तत्रापि प्राप्तोऽसि त्वम् विडम्बनाः ॥ १६ ॥
प्राप्ततीरं ग्रहीत्वा त्वां शकटं वाहयन्ति ते । भूरिभारभरं नीचा-स्तुदन्तस्तीक्ष्णयारया ॥ १७ ॥
परिश्रान्तो यदाभूस्त्वं चलितुं नैव शक्यते । तदा तैर्मुद्गरैर्हत्वा चूर्ण्यसे क्षणमात्रतः ॥ १८ ॥
पुनः सम्मिलिते गात्रे बोधयन्त्यसुराश्च त्वाम् । पूर्वहिंसादिना बद्धं तस्यामूनि फलानि च ॥ १९ ॥
आस्फाल्यसे शिलायां त्वं कुन्ताग्रैर्भिद्यसे पुनः । छिद्यसे करपत्रैर्हा ! पील्यसे यंत्रकर्मणा ॥ २० ॥
अग्निपक्वानि तेऽङ्गीय-मांसखण्डानि खाद्यसे । प्रभुज्य मांसमायातः कथ्यसे त्वम् यतस्ततः ॥ २१ ॥
एवं त्वं नारकीभूय दुःखी जातो कुकर्मतः । एवं कुरु यथा नैव पुनस्तत्र गतिर्भवेत् ॥ २२ ॥
तत्र तिरश्चि योनौ च गत्यभावः सदा भवेत् । तत्त्वत्रय्यां यदा मग्न-मानसस्त्वं भविष्यसि ॥ २३ ॥

इति नरकवर्णनात्मकस्तृतीयो गुच्छकः समाप्तः ।

## चतुर्थगुच्छकः ।

सुदेवसत्गुरुर्धर्माः एतत्तत्त्वत्रयं परम् । ज्ञात्वा दृढस्थितं कार्यं चेतसि येन प्राप्स्यसे ॥ १ ॥
सम्यक्त्वं निर्मलं रत्नं चिन्तारत्नमिवाद्भुतम् । यदग्रे लौकिकं रत्नं काचखण्डायतेऽखिलम् ॥ २ ॥

त्यागैषी सर्वसाधूनां बहुमानपरायणः । सर्वदेशव्रतस्थानां श्लाघामेवं मुहुर्वदेत् ॥ ५४ ॥
" धन्यास्ते कृतपुण्यास्ते तैस्त्रैलोक्यं पवित्रितम् । यैरेष भुवनक्लेशी काममल्लो निपातितः " ॥ ५५ ॥
" संसर्गेऽप्युपसर्गाणां दृढव्रतपरायणाः । धन्यास्ते कामदेवाद्याः श्लाघ्यास्तीर्थकृतामपि " ॥ ५६ ॥
चारित्रपक्षपातित्वाद् व्रताभावेऽपि देवता । वैमानिकेषु जायेत संविग्नो विघ्नहारकः ॥ ५७ ॥
प्राणात्ययेऽपि कुर्यान्न शासनोड्डाहिकां क्रियाम् । गुणिषु मानदो ज्ञेयो लोकेषु शिथिलादरः ॥ ५८ ॥
संसाराभ्युदये नैव तथा हर्षो यथा व्रते । असंयमे सदोद्विग्नो धर्मोपादेयमिच्छति ॥ ५९ ॥
चैत्त्यचत्युपयोगी यः पदार्थः सफलो मम । स एव नान्यथा यस्माद् बीजं क्षेत्रे फलप्रदम् ॥ ६० ॥
एवं भावक्रियायुक्तो लक्ष्यते शुद्धदर्शनी । तत्संविग्नक्रियालिङ्गं सम्यक्त्वगमकं मतम् ॥ ६१ ॥
सम्यक्त्वदृष्टिको जीवो गहनाद्भवदुःखतः । निर्विग्नश्चिन्तयत्येवं दुःखमूलं त्रिविष्टपम् ॥ ६२ ॥
" रङ्गभूमिर्न सा काचिच्छुद्धा जगति विद्यते । विचित्रैः कर्मनेपथ्यै-र्यत्र सत्त्वैर्न नाटितम् " ॥ ६३ ॥
चक्षुरुन्मेषकालेऽपि सुखं यत्र न विद्यते । केवलं दुःखसंतप्तो निरये नारको भवेत् ॥ ६४ ॥
सागरांश्च त्रयस्त्रिंश-दुत्कृष्टस्थितिभाजी सः । यावत् पापच्यमानो हा ! तिष्ठति कृतकर्मतः ॥ ६५ ॥
ततस्तिर्यक्षु तत्रैव पुनरेवं गतागतम् । कुरुते दुःखदं जीव अज्ञानतमसावृतः ॥ ६६ ॥
महत्कालान्तरे प्राप्य नृत्वं हीनकुलादिषु । दासानामपि दासत्व-माप्नुयात् पूर्वकर्मतः ॥ ६७ ॥

कुदेवकुगुरू ज्ञात्वा कुधर्मं त्वं तथैव च । अमीभिर्लक्षणैश्चेतः ! दूरे तिष्ठेः सदा ततः ॥ ३ ॥
सुदेवसुगुरू ज्ञात्वा सुधर्मं त्वं तथैव च । सेवस्व नित्यमेतानि त्रीणि तत्त्वानि लक्षणैः ॥ ४ ॥
लब्धायां सर्वसामग्र्यां मिथ्यात्वतिमिरान्धकाः । सम्यक्त्वदीपहीना हा ! सत्पथं नैव जानते ॥ ५ ॥
कुदेवकुगुरू लोके धर्मं च कुत्सितं तथा । एतत्त्रयं हि मिथ्यात्वं जानीहि दुःखदायकम् ॥ ६ ॥
रागद्वेषयुतो देवो यः कुदेवः स कथ्यते । काञ्चनकामिनीलुब्धः कुगुरुर्यो गुरूयते ॥ ७ ॥
हिंसया सहितो योऽत्र धर्मः सोऽस्ति कुधर्मकः । एतत्त्रये निमग्ना ये संसारं संसरन्ति ते ॥ ८ ॥
वीतरागः सुदेवः स्याद् व्रतस्थः सुगुरुस्तथा । दयाप्रधानधर्मो हि सुष्ठुधर्मो प्रकीर्तितः ॥ ९ ॥
एतत्त्रयं सुमन्यन्ते ते नरा शिवगामिनः । नरदेवभवान्कृत्वा भवन्ति स्वल्पकालतः ॥ १० ॥
एतत्सम्यक्त्वदीपेन निरस्य मोहजं तमः । गच्छन्ति श्रेयसो मार्गं नरा द्राग्लब्धचेतनाः ॥ ११ ॥
मूलं धर्मतरोरेतद् द्वारं मोक्षस्य कथ्यते । यानपात्रं भवाब्धौ च गुणानामास्पदं मतम् ॥ १२ ॥
सर्वलक्ष्म्या निधानं हि कारणं तीर्थकृच्छ्रियः । धन्यास्ते पालयन्तीह ये सम्यक्त्वं सुखाकरम् ॥ १३ ॥
अङ्कस्थाने हि सम्यक्त्वं सर्वं शून्यं ततः परम् । अङ्कस्य रक्षणे जाते शून्यानि फलदानि च ॥ १४ ॥
कुतर्कग्रहग्रस्ता हा ! केचिद्धर्मबहिर्मुखाः । दूषयन्ति कुकर्माणो हारयन्ति जनुर्वृथा ॥ १५ ॥
पूर्वर्षीणां समर्थानां कथनं नैव रोचते । अधर्मिभ्यश्च मूर्खेभ्यः प्रमेहिभ्यो घृतं यथा ॥ १६ ॥

पृथिव्यादिनिकायानां विनाशश्चैत्यकारणे । यद्यपि स्यात् तथापि नो सम्यग्दृष्टिः स दूषितः ॥ ८२ ॥
यदस्माद्विरता वुद्धा-स्तान् रक्षन्ति निरन्तरम् । गता मुक्तिगतिं जीवाः साद्यनन्तस्थितिस्थिताः॥८३॥ युग्मम्
यथा रोगिशिरावेधः-क्रिया सुवैद्यदर्शिता । सुन्दरा परिणामेऽत्र तथा चैत्यादिकारणम् ॥ ८४ ॥
प्रवृत्तिहेतुरन्येषां समारम्भो विधेर्भवेत् । स सूत्राज्ज्ञायते तेन तदादौ लेखयाम्यहम् ॥ ८५ ॥
जिनवचोमृतश्रुत्वा-ज्ञातवस्तुस्वभावकाः । कुश्रुतेर्विरताः केचि-ज्जैनधर्ममवाप्नुयुः ॥ ८६ ॥
अन्येषां यानि यान्यत्र धर्मबोधकराणि वै । साधनानि भवेयुर्हि तानि संसाधयाम्यहम् ॥ ८७ ॥
सम्पादयामि साधूनां पाठने साधनानि यत् । कुतीर्थिनः प्रबोधेन मिथ्यात्वान् मोचयन्ति ते ॥ ८८ ॥
धर्माधर्मास्तिकायाऽऽका-शास्तिकायादयो मताः । सिद्धान्तवादिनां जीवा-द्विपरीता जडात्मकाः ॥ ८९ ॥
पुद्गलाश्चेद्गवेयुर्ना-कृतिः सर्वत्र किं नहि । स्वप्नेऽनुभूयते योऽर्थो दिनोपलब्ध एव सः ॥ ९० ॥
शुभप्रकृतयः पुण्य-मशुभाः पापमेव च । सुखिदुःखिजनोत्पाद आभ्यां न समभूततः ॥ ९१ ॥
सुखदुःखाश्रवो लोके द्विविधोऽस्ति शरीरिणाम् । श्रेष्ठानुष्ठानतश्चाद्यो द्वितीयः स्याद्वधादिभिः ॥ ९२ ॥
शुभाश्रवो वधादिभ्यः सौनिकानां न किं भवेत् । चेदागमः कथं शुद्धो ? जीवघातप्रदर्शकः ॥ ९३ ॥
वीतरागोऽस्ति सर्वज्ञ-स्तदुक्तिः स्यात् सदागमः । यतोऽनृतं न स ब्रूया-दभावे द्वेषरागयोः ॥ ९४ ॥
पापस्थानाद्विरक्तत्वं संवरो व्यवहारतः । निश्चयात्स्याच्च शैलेश्यां मुक्तिगो यदनन्तरम् ॥ ९५ ॥

स्थैर्यं प्रभावनावश्य–कादिक्रियासु कौशलम् । अर्हदादिषु यद् भक्ति–रान्तरिकीश्चतुर्थकम् ॥१३७॥
पञ्चमं तीर्थसेवाख्य–मेवं भूषणपञ्चकम् । सम्यक्त्वं भूषयन्त्येव तानि कार्याणि शक्तितः ॥१३८॥
सुलसा देवपालोऽन्यो–दायिभूपश्च कामिनी । पक्षिणविक्रमो राजा ज्ञातानि सन्ति भूपणे ॥१३९॥
पञ्चलिङ्गानि सम्यक्त्वे प्रागुक्तानि भवन्ति हि । क्रूरगडुकनिर्ग्रन्थौ तथात्र हरिवाहनम् ॥१४०॥
निदर्शनानि जानीयाः श्रीवीरं पद्मशेखरम् । अनुक्रमेण लिङ्गेषु ख्यातानि जैनदर्शने ॥ युग्मम् ॥१४१॥
अन्यतीर्थिमते देवे तथान्यगृहीतार्हति । पूजनं वन्दनं त्याज्यं मिथ्यामतविवर्द्धनम् ॥१४२॥
सङ्ग्रामशूरवत्कार्याऽऽद्या द्वितीया तथा त्वया । यतना येन भो भव्या ! गमिष्यसि शिवालयम् ॥१४३॥
मिथ्यात्वासक्तचित्तैर्भोः ! सहालापविवर्जनम् । संलापवर्जनं कार्यं तृतीया स्याच्चतुर्थी च ॥१४४॥
सकृद्वा बहुवारं वा पात्रबुद्ध्याशनादिकम् । सदालपुत्रवद्देयं पञ्चमी षष्ठ्यनुक्रमात् ॥१४५॥
अपवादे खलु प्रोक्ता आकारा षड्विधा जिनैः । भूपतिगणकान्तार–वृत्तिगुरुसुराग्रहाः ॥१४६॥
षष्ठो बलाभियोगश्चोत्सर्गस्थैर्नैव सेविताः । व्रतभङ्गान्महद्दुःखं जीवनं यत्पुनः पुनः ॥ युग्मम् ॥१४७॥
कोशा सुधर्मभूभृच्चा–चंकारी सुलसस्तथा । नमिः सुदर्शनो ज्ञेया ज्ञातेषु बुद्धिशालिना ॥१४८॥
मूलं द्वारं तथा पीठ–माधारो भाजनं निधिः । सम्यक्त्वं शुद्धधर्मस्य षडेता भावना मताः ॥१४९॥

---

१ त्रिविक्रम इत्यर्थः ।

नेत्रे तद्दर्शनेनैव पाणी पूजनकर्मणा । चैत्यागमेन पादौ च मनः संस्मरणात्तथा ॥ युग्मम् ॥ ३१ ॥
प्रातरुत्थाय ये लोका बालादेर्लालने रताः । शाकपानप्रसक्ताश्च प्रभुपूजाविवर्जिताः ॥ ३२ ॥
ते लोके पशुभिस्तुल्या वृथा तैर्जन्म हार्यते । पूजनं लोकनाथस्य नाप्यते दर्शनं तथा ॥ युग्मम् ॥ ३३ ॥
पूजितो न नुतो ध्यातो जिनो यै र्न च वन्दितः । जन्म निरर्थकं तेषा-मरण्ये मालती यथा ॥ ३४ ॥
जडापि सुप्रभोर्मूर्तिः पूज्या सद्ध्यानतत्परैः । प्रभुभावप्रकाशाय यतोऽसाधारणास्ति सा ॥ ३५ ॥
यथा चित्रगता ग्रामाः साक्षाद् बोधविधायकाः । तदन्तरेण न ज्ञानं ज्ञानेऽसाधारणा मताः ॥ ३६ ॥
जडरूपं यथा भोज्यं बुद्धिबलविवर्धकम् । तथा मूर्तिर्जिनेशानां केवलज्ञानदायिका ॥ ३७ ॥
कल्पसूत्रे समायाति चरित्रं नागकेतवम् । उज्ज्वलं केवलं लेभे जिनमूर्तेरुपासनात् ॥ ३८ ॥
श्वश्रू-वध्वोर्वृथा मूर्खै-र्वृत्तं मूर्त्तौ प्रकल्पितम् । यतो नामापि तत्तुल्यं गृह्यते किं तर्कैर्हि तत्? ॥ ३९ ॥
कियन्तः कथयन्तीह यवनैर्मूर्तयो हताः । प्रभावस्तासु चेद् भूयात् कथमेवं प्रजायते? ॥ ४० ॥
एतदेवोत्तरं चास्य तेभ्यो वितीर्यते मया । मूर्तिहीनेश्वरस्यापि गालिं ददते नास्तिकाः. ॥ ४१ ॥

१—ढूंढकपुत्र्यैका श्वश्वा जिनमन्दिरं नीता मूलद्वारे विलोक्य सिंहचित्रं भयं नाटिता, श्वश्वा प्रोक्तं पाषाणमयोऽयं सिंहो न खादति मा भैषीरिति, ततोऽभ्यन्तरे गत्वा नम जिनमूर्तिमिति श्वश्वा प्रोक्ते पाषाणमयसिंहो यदि न खादति तर्हि मूर्तिरियं कथं रक्षतीति सावददित्यत्र वृत्तं बोध्यम् । तुल्यतया नाम्न्यपि तथा संभवान्नामापि ते कथं गृह्णीरन्नित्युत्तरार्धस्याभिप्रायः ॥

अन्यग्रन्थार्णवात्सारं पय आदाय वर्षति । वैराग्यसस्यनिष्पत्यै ग्रन्थोऽयं मे घनोपमः ॥ १६४ ॥
पूर्वर्षिप्रोक्त एवास्ति भावोऽत्र चित्तहारकः । शतशः त्रुटिसंयुक्ता केवलाऽस्ति कृतिर्मम ॥ १६५ ॥
पूज्यपादैस्तथा प्रातःस्मरणीयैश्च प्रेरितः । श्रीमत्कमलसूरीशै र्गुरुभिः कृतवानहम् ॥ १६६ ॥
रचनां विजयाल्लब्धिः परः सूरिर्गुणावहाम् । पक्षमात्रेण कालेन भवेयुः स्खलनास्ततः ॥ १६७ ॥
सज्जनैर्हंसवद्भूत्वा सारमादाय केवलम् । पयःपानं हि कर्त्तव्यं त्रुटिनीरमपास्य च ॥ १६८ ॥ विशेषकम्

## प्रशस्तिः

समस्तजन्तुप्रतिपालदक्षः सिद्धार्थसूनुः कलधौतकान्तिः ।
अनन्तविज्ञानमयः कृपालुः श्रीवीरनाथो जयतु प्रभुस्सः ॥ १ ॥
निःसीमसम्पत् प्रविहाय यस्य सुधाधिकं सद्वचनं निशम्य ।
जम्बूर्मुनित्वं ह्यभजत्क्षणेन स श्रीसुधर्मा जयताद्गणेशः ॥ २ ॥
नवीनचौरः प्रभवस्त्रिलोक्यां चौर्यापदेशादभजच्छिवं यः ।
शय्यम्भवं बोधयतिस्म विप्रं सुयाज्ञिकं ज्ञाननिधिस्स जीयात् ॥ ३ ॥

दृढप्रहारिकं पापं गुरुमृते नयेद्धि कः ? । मुक्तिं त्यागं समर्प्यात्र गुरवो हि कृपालवः ॥ ५५ ॥
अमूल्यं मानवं रत्नं मणिकारं गुरुं विना । स्त्रीगन्त्रीवाटिकामग्ना न जानन्ति कदाचन ॥ ५६ ॥
गोविन्द इव वन्दन्तेऽनलसा ये जना हि ते । नारकादिक्षयं कृत्वा भवेयुः स्वर्गमोक्षगाः ॥ ५७ ॥
त्यागिनां वन्दने त्यागानुमोदो भवति ध्रुवम् । त्यागानुमोदनाद् भावी त्यागगुणो निजात्मनि ॥ ५८ ॥
आलस्यादिनिबद्धो यः सुगुरुं नैव वन्दते । शृङ्गपुच्छविहीनः स मन्तव्यः पशुरेव च ॥ ५९ ॥
मत्वेति सुगुरुं नित्यं सेवस्व शुभभावतः । येन मिथ्यामतं त्वां न बाधते क्वापि मानस ! ॥ ६० ॥
कुगुरुः परिहर्तव्यो विज्ञानालङ्कृतोऽपि हि । विषपात्रगता किं न सुधा निहन्ति जीवितम् ? ॥ ६१ ॥
सुधर्मः सेवनीयोऽस्ति रोगार्त्तैरिव भेषजम् । कर्मकफादिकं हन्ता स एव परमौषधम् ॥ ६२ ॥
सुधर्मात् सुकुले जन्म सम्पदारोग्यमेव च । विद्यासिद्धिः प्रसिद्धिश्च भवतीति स सेव्यताम् ॥ ६३ ॥
धर्माद् धनं धनात् कामः कामात् सौख्यं प्रजायते । कार्यार्थी कारणं त्वं चे-दन्वेषयेस्तदा सुखम् ॥ ६४ ॥
धर्म एव ब्रुडज्जन्तून् कूपान्निर्गमको मतः । रज्जुरिवात्र भो तस्माद् धर्मसेवापरो भव ॥ ६५ ॥
दारिद्र्यभेदको धर्मः सर्ववाञ्छितपूरकः । धर्मः कल्पतरुः साक्षाद् धर्म एव सतां गतिः ॥ ६६ ॥
शरणं धर्म एवात्र कर्मकृते सदा भ्रमे । दुःखप्रचूरपूरेण सहिते भवचक्रके ॥ ६७ ॥
कश्चिद्दुःखी सुखी कश्चिद्रोगी कश्चिन्निरागकः । निर्बुद्धिर्बुद्धिमान् कश्चि-दधर्मधर्मतो भवेत् ॥ ६८ ॥

यदुपदेशदातॄणा-मुपकारेऽस्ति नावधिः । तदा तद्धर्मभावस्यो-पकारे च कथं भवेत् ? ॥ ८३ ॥
धर्मादधिगतैश्वर्यो यो नित्यं तं च सेवते । स हि शुभगतिर्भावी कृतज्ञेषु शिरोमणिः ॥ ८४ ॥
धर्मादधिगतैश्वर्यो यस्तमेव निहन्ति च । नास्य शुभगतेर्लाभोऽकृतज्ञानां शिरोमणेः ॥ ८५ ॥
वने रणे जलाग्नौ च शत्रूणां निचये स्थितम् । भयाक्रान्ते च कान्तारे धर्म एको हि रक्षति ॥ ८६ ॥
धर्मं वर्द्धयतो वृद्धिः क्षयं क्षपयतो भवेत् । धर्मवृद्धिस्ततः कार्या स्वकीयां वृद्धिमिच्छता ॥ ८७ ॥
त्रिषु मित्रेषु धर्मोऽयं सामान्यपङ्क्तिगः कृतः । तथापि दुःखनिस्तारे सर्वेषामुपरि स्थितः ॥ ८८ ॥
यदि पर्यन्तकालेऽपि धर्मे प्रीतिर्विधीयते । तर्हि त्वां स्वर्गगं कृत्वा कर्तव्यात्स्वं विमुञ्चति ॥ ८९ ॥
माता पिता सुता दार-भ्रातृजायादयोऽखिलाः । स्वार्थनिष्ठा मता एको धर्मः परमबान्धवः ॥ ९० ॥
रसायनाद्यथा लोके कश्चिद्रोगः प्रशाम्यति । धर्मरसायनाद्धो भोः सर्वरोगः प्रणश्यति ॥ ९१ ॥
सर्वं जगद्गतं वस्तु विद्यते नेत्रयोः पथि । तत्सर्वं पुद्गलाज्जात-मेकस्मान्नात्र संशयः ॥ ९२ ॥
तथा यद् यत्सुखं चात्र परत्रापि च विद्यते । त्रिकालभावि तत्सर्व-मेकस्माद्धर्मतो भवेत् ॥ ९३ ॥
एवं सर्वेप्सिते सौख्ये यो धर्मः कार्यकृन्मतः । सर्वानिष्टहरे तस्मिन् केनालस्यं विधीयते ? ॥ ९४ ॥
यस्त्रिवर्गेषु मुख्योऽस्ति परत्रेह हितप्रदः । कर्मराशिविनाशी यः स सेव्यः श्रीजिनोदितः ॥ ९५ ॥

१–नित्यमित्रसमो देहः स्वजनाः पर्वसन्निभाः नमस्कारसमो ज्ञेयो धर्मः परमबान्धवः इति श्लोकार्थोऽत्र भाव्यः ॥

दानं दुर्गतिहारि स्याद् दानं सद्गतिदायकम् । सर्वे आदानमिच्छन्ति दानं तु विरला जनाः ॥ ११० ॥
दा दाने धातुराख्याति दा तत्र नैव दुर्गतिः । एवं तु दानसंयोगात् दानाद् दुर्गतिर्वार्यते ॥ १११ ॥
कूपवृक्षमहिष्यादे-र्ददत एव वर्द्धनम् । अन्यथा क्षय एवास्ति तस्माद्दानं प्रशस्यते ॥ ११२ ॥
संसाराब्धौ भवेद्दानं सत्तरण्डं सुखावहम् । कर्मभूभृद्विनाशे हि दानं वज्रसमं मतम् ॥ ११३ ॥
सद्गतेः कारणं दानं येन सावद्यकारकः । रथकारो गतः स्वर्ग बलभद्रप्रदानतः ॥ ११४ ॥
वस्त्रपात्रान्नभैषज्य-वसत्यादि प्रदानतः । धर्मोपष्टम्भदानं स्या-दाधिव्याधिविनाशकम् ॥ ११५ ॥
सक्तुदानजपुण्येन रङ्कस्य कस्याचिद्यथा । कर्करा बालक्रीडायै ग्रहीता मणयोऽभवन् ॥ ११६ ॥
भूयांसो भवतस्तीर्णा दानपुण्यप्रभावतः । शालीभद्रभवं पश्य दानमाहात्म्यसूचकम् ॥ ११७ ॥
परोपकार एवास्ति स्वोपकारो मतो बुधैः । परोपकारहीनस्य नीचस्य जीवनेन किम् ? ॥ ११८ ॥
पशवोऽपि वराश्रमे-दुग्धाद्यैरुपकारिणः । परोपकारशून्यस्य नरस्य जीवितं हि धिक् ! ॥ ११९ ॥
ज्ञानदानं वरं प्रोक्त-मन्तर्ज्योतिःप्रकाशकम् । तत्त्वातत्त्वौ ततो ज्ञात्वा जीवः स्यात्सुखभाजनम् ॥ १२० ॥
तज्ज्ञानस्य प्रचारः स्यात् पुस्तकानां प्रचारतः । ततो द्रव्यव्ययेनापि कर्तव्यः स मनीषिणा ॥ १२१ ॥
दातव्यमभयं दानं निर्भयपददायकम् । सर्वलाभान् परित्यज्य जीवो जीवनमिच्छति ॥ १२२ ॥

---

१–जलफलपयांसि ददत इति भाव्यम् ॥

शरीरनगरीराज्येऽभिषिक्तो वीर्यभूपतिः । यावत्स राजते राजा तावत्सौख्यं निरन्तरम् ॥ १३७ ॥
समर्थ सर्वथा भो भोः शीलं तद्रक्षणे मतम् । रक्षयित्वा ततः शीलं रक्षणीयः स भूपतिः ॥ १३८ ॥
ये तु शीलात्परिभ्रष्टाः क्षयादिरोगधारिणः । दुःखिनः स्युरमुत्रात्र लोकदृष्ट्याप्यधस्कृताः ॥ १३९ ॥
हा! हा! क्षणिकसौख्याय लोकख्यात्या विपश्चितः । प्रत्यक्षं गर्दभायन्ते हत्वा स्वां कीर्तिमुज्ज्वलाम् ॥ १४० ॥
अस्थिमांसवसाचर्म-पुञ्जे हा! मूढमानसाः । पृथग्भूते घृणां कुर्युः संयुक्तेऽभिलषन्ति किम् ? ॥ १४१ ॥
नेमिनाथं च सर्वज्ञं जम्बूं श्रेष्ठिसुदर्शनं । स्थूलभद्रं च योगीशं नत्वा शीलं प्रपद्यताम् ॥ १४२ ॥
महत्त्वं मानवे प्राप्तं येन शीलं प्रपालितम् । श्वरासभादियोनिषु कुशीलं तु भवे भवे ॥ १४३ ॥
नाना भवेषु भुक्तेषु सत्स्वपि न प्रजायते । भोगेषु येषु तृप्तिस्ते मा मोहीस्तेषु मानस ! ॥ १४४ ॥
पुनः पुनः पदार्थानां राशिर्दृष्टोऽत्र केनचित् । मायेन्द्रजालतो नष्टे तस्मिन् राशिर्न दृश्यते ॥ १४५ ॥
हावभावादिभिरेवं भुक्ता भोगाश्च लक्षशः । विद्यते सञ्चयस्तेषां न च भोगान्तरे क्षणे ॥ १४६ ॥
मोहमायामतो मुक्त्वा त्यक्त्वा विषयवासनाम् । शीलरत्नं महद्रत्नं रक्षणीयं प्रयत्नतः ॥ १४७ ॥
तपः त्रिविष्टपे पूज्यं तपसाऽऽवर्जिताः सुराः । सर्वेऽपि किंकरायन्ते तत्तपो भो ! विधीयताम् ॥ १४८ ॥
सप्तानां घातको योऽभूदर्ज्जुनाह्वयमालिकः । तपसा सिद्धिमापत्स तत्तपो भो ! विधीयताम् ॥ १४९ ॥
गोहत्यादिमहापापान् मुक्तो दृढप्रहारिकः । घोरेण तपसा जात-स्तत्तपो भो ! विधीयताम् ॥ १५० ॥

धातुरक्तपलानां हि शोषकं दुष्करं तपः। तथापि कर्मनाशेऽन्यत् कारणं न सतां मतम् ॥ १५१ ॥
निकाचितानि कर्माणि नीयन्ते भोगतः क्षयम्। ख्यातोऽयमपि सिद्धान्तस्तपेनादरितो नहि ॥ १५२ ॥
तपोऽग्निदग्धकर्मा भो! आत्मभावे स्थिताः सदा। निरहंकारिणो जीवा लभन्ते मोक्षसम्पदाम् ॥ १५३ ॥
यथाग्नौ पतितं स्वर्ण मलक्षयाद्विशुध्यति। तथा तपोऽग्निनात्माऽयं कर्मक्षयाद्विशुध्यति ॥ १५४ ॥
अतितापप्रतप्तं हि यथाम्र्यमञ्जरीफलम्। बन्धनान्मुच्यते तपसा तथात्मा कर्मबन्धनात् ॥ १५५ ॥
यथा लङ्घनतो याति ज्वरो दुःखप्रदायकः। तथा हि तपसा याति कार्मिको दुःखदो ज्वरः ॥ १५६ ॥
ऊनोदर्यमनाहारो वृत्तिह्रासो रसात्ययः। कायक्लेशसुलीनत्वं विकल्पाः सन्ति बाह्यतः ॥ १५७ ॥
वैयावृत्त्यं च स्वाध्यायो ध्यानं च विनयं तथा। कायोत्सर्गं विजानीयाः प्रायश्चित्तं शुभं तपः ॥ १५८ ॥
आन्तरिका इमे भेदाः तपसां षट् सतां मताः। पूर्वोक्तैर्मिलने जाता द्वादश सौख्यकारकाः ॥ १५९ ॥
तयाराध्याः सदा चेतो! मुक्तिसौख्यं समीहसे। यतस्तपोन्तरा नैव मुक्तिगामी भविष्यसि ॥ १६० ॥
तपोभावनिमग्नात्मा कुभावे नैव रज्यते। यथाक्षीररसास्वादी न क्षाराम्बु समीहसे ॥ १६१ ॥
कथिते त्रिविधे धर्मे भावनात्मा प्रचक्ष्यते। तां विना स त्रिधा धर्मो निर्जीव इव लक्ष्यते ॥ १६२ ॥
भावना शास्त्रकारैश्च ख्याता द्वादशभेदतः। सर्वशुभङ्करा लोके ध्यातास्ताः शिवदा मताः ॥ १६३ ॥
यद्यद् नेत्रगतं लोके तत्तत् सर्व विनाशि हि। व्यामोहो निष्फलस्तेषु दुःखानलविधायकः ॥ १६४ ॥

पयःस्थापक्वकुम्भस्य यथा नाशः पले पले । तथाऽऽवीच्याख्यमृत्युना-स्वायुर्नाशः क्षणे क्षणे ॥ १६५ ॥
अनन्ताः पूर्वजास्ते न स्थितास्तत्र कथं भवान् । स्थास्यतीति विचिन्त्यात्र व्यामोहं न विधेहि भोः! ॥ १६६ ॥
नराणां सञ्चया ये य आयान्ति नेत्रयोः पथि । प्रायो वर्षशतादूर्ध्वं नाऽत्र कोऽप्यवशिष्यते ॥ १६७ ॥
मायेन्द्रजालवत् सर्वं विद्युत्कान्तिरिवाथवा । क्षणदृष्टं क्षणान्नष्टं प्रतिबन्धोऽत्र को भुवि ? ॥ १६८ ॥
गृहीत्वा या मुहुर्मुक्ताः स्वजन-श्रेणयो भवे । न मान्ति संग्रहीतास्ताः सर्वाकाशे कथंचन ॥ १६९ ॥
यानि मुक्तानि जीवेन शरीराणि भवे भवे । बिन्दुभिः सागरानन्तै-स्तेषां संख्या न विद्यते ॥ १७० ॥
बंभ्रमीत्यत्र योनिष्ठं जगन्मुक्तिं लभेत न । जन्ममृत्युजराभ्योऽयं पाताले प्रविशन्नपि ॥ १७१ ॥
वाताहतो यथा पत्र-पुञ्जो याति पृथक् पृथक् । तथेष्टं हा ! कुटुम्बं ते कर्मवायुहतं भवेत् ॥ १७२ ॥
हा ! मातर्हा ! पितर्बन्धो ! हा प्रिये ! हा सुता मम । इति विलपतो जीवान् कृतान्तो नह्युपेक्षते ॥ १७३ ॥
सायं वृक्षे यथोषित्वा भिन्नदिगागताः खगाः । प्रातः प्रयान्ति कुत्रापि ज्ञायन्ते दिशि नो जनैः ॥ १७४ ॥
तथा गृहतरौ जीवा गतिनानादिगागताः । उषित्वा पञ्चषान्दिनान् न ज्ञायन्ते गताःक्वच ॥ १७५ ॥
अप्राप्तपुष्पफलकं हा ! जगत्वृक्षं क्रमेलकैः । खाद्यते मृत्युरूपैर्भो भव्या ! बुध्यत बुध्यत ॥ १७६ ॥
गर्भस्थं योनिगं चात्र निर्गच्छन्तं च निर्गतम् । बालं प्रवर्धमानं च वृद्धं च तरुणं तथा ॥ १७७ ॥
पृथ्वीपतिं-तथा रोरं मूर्खं पाण्डित्यशालिनं । सुखिनं दुःखिनं मृत्युः सुरूपं रूपवर्जितम् ॥ १७८ ॥

सरुजं निरुजं चापि दुर्बलं बलिनं तथा। हन्ति चराचरं सर्वं ज्वलद्दावानलो यथा ॥ १७९ ॥ त्रिभिर्विशेषकम्
विमुक्तव्यं शरीरं स्यात् कदाचिदप्यशाश्वतम्। तस्मादनशनैर्भव्या! लभध्वं शाश्वतं सुखम् ॥ १८० ॥
सर्वार्थसिद्धवास्यत्रा–युषि जीर्णे पतेत् सुरः। त्रिंत्रिंशत्सागरायुष्कोऽन्येषां का गणना भवेत्? ॥ १८१ ॥
स प्रदेशोऽपि नास्त्येव लोकेऽत्र त्रिविधेऽपि च। यत्र व्याधिगतो नष्टो न जीवो निजकर्मभिः ॥ १८२ ॥
स्वामी संजायते दासो दासः स्वामी भवेत्तथा। अमित्रं मित्रतां याति मित्रं याति च शत्रुताम् ॥ १८३ ॥
यत्प्रातस्तन्न मध्याह्ने यन्मध्याह्ने न तन्निशि। इत्यनित्यतया व्याप्ते वृथा मोहो विधीयते ॥ १८४ ॥ युग्मम्
ईदृग् भवस्वरूपे किं मुह्यसि मूढमानस!। एवं भावनया सूत्र–माद्यया सूच्यते भुवि ॥ १८५ ॥
विद्यते शरणं नात्र मरणे कस्यचिद्भवे। अशरणा नृदेवेन्द्रा व्रजन्ति यमधामनि ॥ १८६ ॥
हा! हा! रोगभराक्रान्तेऽनाथे नाथोऽभवन्नहि। कश्चिच्छरणदातात्र धर्मस्य शरणं ललौ ॥ १८७ ॥
गर्भस्थं जायमानं च सुप्तं मातुः समीपगम्। आर्यमनार्यमिष्टं वा–निष्टं हरेत् कृतान्तकः ॥ १८८ ॥
न कोऽपि शरणं चात्र लोकेधर्मम्ृते तव। एवं शरण्यहीने त्वं निष्पुण्यः किमु ताम्यति ॥ १८९ ॥
सपुण्यो धर्ममाचर्य सशरण्यं करोति च। अशरण्यमिमं लोकं धर्मस्य गहना गतिः ॥ १९० ॥
यदा द्वैपायनेनात्र दग्धा द्वारवती पुरी। न जज्ञे शरणं कृष्णो वासुदेवपदेस्थितः ॥ १९१ ॥
धनञ्जयेन पञ्चत्व–मापिरेऽनेकशो जनाः। धर्मेण मोचितास्तत्र रुच्यङ्गीकृतसंयमाः ॥ १९२ ॥ युग्मम्

आधिव्याधिहतो जीवः कुटुम्बान्तर्गतः प्रियः दन्दहीत्यत्र दुःखाग्नौ वह्नौ चटकपोतवत् ॥ १९३ ॥
न दुःखं स्वजना लान्ति वैद्यास्त्राणं न चौषधैः । कुर्वन्ति नीयते जीवो मृत्युव्याघ्रेणपोतवत् ॥ १९४ ॥
मुच्यते नैव द्रव्येण मन्त्रतन्त्रैर्भुजाबलैः । औषधिमणिविद्याभि-र्विना धर्मं च मृत्युतः ॥ १९५ ॥
संसरन्तोऽत्र संसारे जीवाः शरणवर्जिताः । जराजन्मादिदुःखानि लभन्ते विप्रयोगिनः ॥ १९६ ॥
वासुदेवबलाश्चेन्द्रास्तथात्र चक्रवर्त्तिनः । म्रियन्ते शरणाद्धीना-स्तस्माद्धर्मं समाचर ॥ १९७ ॥
इयमाख्याति लोकेऽत्र शरणं धर्म एव वः । तमङ्गीकृत्य भो भव्य ! भावनां सफलीकुरु ॥ १९८ ॥
जन्ममृत्युजराध्वस्ताः शोकरोगप्रपीडिताः । प्राप्नुवन्ति सहस्राणि दुःखानि भवसागरे ॥ १९९ ॥
संसारे तत्सुखं नास्ति यन्न भुक्तं भवे भवे । यत्र जातो मृतो नैव सा योनिर्नैव विद्यते ॥ २०० ॥
यदि त्वं तैः सुखैर्जीवः सन्तोषभाग् न चाभवः । क्षणिकैर्वर्त्तमानैस्तैः कथं तृप्तिर्भविष्यति ? ॥ २०१ ॥
तिलतुषसमं नास्ति द्रव्यं यन्नहि भुक्तवान् । मुक्तवान् जगति जीवास्तत्सर्वं वान्तिवद्भवेत् ॥ २०२ ॥
महानिधिनिभं जन्म विषयास्त्वस्थिखण्डवत् । जायन्ते जनुषा येन सर्वाण्यपि सुखानि हि ॥ २०३ ॥
जनिता ग्रसिताः सर्वे एष सर्वैश्च ग्रासितः । जनितो भवकान्तारे नास्ति कः कस्य वल्लभः ? ॥ २०४ ॥
सर्वेऽपि देवता आसन् नृतिर्यञ्चोप्यनन्तशः । श्वभ्रज्वालाभिराक्रान्ता दुःखिनो भवसागरे ॥ २०५ ॥
धिग् धिगसारसंसारं देवस्तिर्यक्षु जायते । मृत्वा हा ! राजराजोऽपि श्वभ्रज्वालासु पच्यते ॥ २०६ ॥

चातुर्गतिकसंसारे दुःखानि विविधानि च । अनुभूतानि जीवेन दर्श्यन्ते लेशतो मया ॥ २२० ॥
निगोदेषु वसञ्जीवोऽनन्तानन्तमनेहसम् । दुःसहं लभते दुःखमेकोच्छ्वासे कृता भवाः ॥ २२१ ॥
सप्त दश सदा येन दुःखसीमा कथं भवेत् । ततो निर्गत्य पृथ्व्यादिचतुष्के बम्भ्रमीति हा ! ॥ २२२ ॥ युग्मम्
उत्सर्पिणीरसंख्याता तिष्ठति तत्र दुःखितः । जीवो वनस्पतौ प्राप्तः दुःखानि सहते सदा ॥ २२३ ॥
ततो निर्गत्य जन्तुः सः विकलाक्षेषु जायते । संख्यातान्यत्र वर्षाणि वसति दुःखपूरितः ॥ २२४ ॥
ततः पञ्चाक्षजीवेषु जायन्ते जलगादिषु[1] । हन्यन्ते दुष्टकैर्वर्त्तैर्[2]बहिष्कृष्ट्वा कुकर्मभिः ॥ २२५ ॥
क्षुत्तृषाभारवाहाङ्कच्छेदनिर्लाञ्छनादिभिः । दुःखिताः पशवो लोके दृश्यन्ते हा ! पदे पदे ॥ २२६ ॥
पक्षिणामपि पापा हा रसनेन्द्रियलुब्धकाः । प्राणान् हरन्ति निःशूका मृत्वा ते स्युर्हि नारका ॥ २२७ ॥
नारके यानि दुःखानि तान्युक्तानि च पूर्वतः । ज्ञात्वा नैव कदा कार्या हिंसा तन्नरकप्रदा ॥ २२८ ॥
एवं दुःखानि तिर्यक्षु प्राप्य जीवः पुनस्ततः । जायते योषितां गर्भे दुःखतो नरकोपमे ॥ २२९ ॥
प्रतिरोमोष्णसूचिभिस्ताप्यमानस्य देहिनः । यत्कष्टं जायते तस्माद् गर्भे त्वष्टगुणा व्यथा ॥ २३० ॥
अधोमुखा हि तिष्ठन्ति गर्भे वर्चोगृहे हहा ! । जठराग्निप्रदीप्तेऽत्र द्वादशाब्दानि केचन ॥ २३१ ॥
जायन्ते जन्मवेलायां व्यथातुरा मृता इव । म्रियन्ते मारयन्ते च मातरं केऽपि जन्तवः ॥ २३२ ॥

१—आदिपदेन स्थलचरखेचरौ ग्राह्यौ । २—धीवरैः ।

वाल्ययौवनवार्धक्येऽशुचिकामजरातुरे । मानवेऽपि भवे दुःखं समस्त्येवमनेकधा ॥ २३३ ॥

केचित् पुण्यं विधायात्र सामान्यं देवयोनिषु । किल्बिषिकादयो जाता दुःखिनः किङ्करा इव ॥ २३४ ॥

नितान्तसेवया चित्ते खिद्यन्ति ते मुहुर्मुहुः । तथा परश्रियं दृष्ट्वाऽधिकां न्यूनां च स्वां श्रियम् ॥ २३५ ॥

परदेवीं सुरूपां ते संहृत्य कामविह्वलाः । कृष्णराजीविमानेषु लीनाः स्युस्तस्करा इव ॥ २३६ ॥

ज्ञात्वेन्द्रस्तान् स्थिताँस्तत्र त्सरुणा हन्ति मस्तके । क्रन्दन्ति पीडया यावत् षण्मासीं ते मृता इव ॥ २३७ ॥

भाविनीं दुर्गतिं ज्ञात्वा स्वस्य केचिच्च दुःखिनः । आर्त्तध्यानेन जायन्ते तज्ज्ञा जानन्ति तेऽथवा ॥ २३८ ॥

ईर्षामानविकारेण क्रोधलोभभयादिभिः । व्याकुलानां च देवाना-मपि सौख्यं कुतो भवेत्? ॥ २३९ ॥

एवं दुःखमयं ज्ञात्वा जगन्मोक्षं सुखावहम् । मोक्षमार्गे मनः कुर्या-स्तत्प्राप्त्यै चोद्यमी भव ॥ २४० ॥

भावनेयं सुभव्येभ्य एवं बोधं ददाति च । भाव्याहं मानसे नित्यं मुच्यन्ते जन्तवो मया ॥ २४१ ॥

आयाति जीव एकाकी गच्छत्येकाकी जायते । दुःखानां भाजनं चैकः संबन्धो वस्तुतो नहि ॥ २४२ ॥

फलं भुङ्क्ते स एकाकी विचित्रं कृतकर्मणः । द्रव्यादिष्वेव दायादा दुःखे कोऽपि न वर्तते ॥ २४३ ॥

माता पिता न च भ्राता पुत्रो योषित्तथैव च । संबन्धी सहगो नास्ति धर्म एवानुगो मतः ॥ २४४ ॥

द्रव्यं तिष्ठति धाम्नि ते रामा विश्रामभूतले । स्मशाने स्वजनाः सर्वे त्वमेको परलोकगः ॥ २४५ ॥

भुङ्क्ते तदर्जितं द्रव्यं कुटुम्बं हर्षनिर्भरम् । दुःखं तु नरकादौ त्व-मेकाकी हा! सहिष्यसे ॥ २४६ ॥

यदर्थं क्रियते पापं दैन्यमालम्ब्यते तथा । स देहोऽप्यननुगामी, तदन्यः को भविष्यति ? ॥ २४७ ॥
एकाकी निःसहायोऽत्र जीवोऽटति भवाटवौ । रूपैर्नानाविधैःकर्म-हतो दुःखी निरन्तरम् ॥ २४८ ॥
यथाऽऽगच्छति जीवोऽत्र कटीसूत्रेण वर्जितः । तथा गच्छति ह्येकाकी मुक्त्वा सर्वं धनादिकम् ॥ २४९ ॥
अनाथो याति जीवो द्रु-पुष्पाणीव स्वकर्मभिः । वायुभिर्हा ! हृतो मुक्त्वा प्रियपुत्रधनादिकम् ॥ २५० ॥
सर्वथा ते हि एकत्वभावना पाठदायिका ! । हावादिभावलग्नं[1] ते चित्तं वारयति क्षणात् ॥ २५१ ॥
द्रव्यमन्यत् सुताद्यन्यद् योषितादि तथैव च । शरीरमपि तेऽन्यच्च सर्वमन्यद् मतं जिनैः ॥ २५२ ॥
महाकुटुम्बयुक्तेषु गृहेषु तेषु ये जनाः । जाता मरणकाले तु नैव तैरनुजग्मिरे ॥ २५३ ॥
क्षणिक एव देहोऽत्र जीवस्तु शाश्वतो मतः । कर्मणा हि तयो-र्योगः किमन्यत्वमतः परम् ॥ २५४ ॥
अन्यत्वभावनाऽऽदत्त-वासनावासिता नराः । न शोचन्ति प्रिये पुत्रे मृतेऽपि हि कदाचन ॥ २५५ ॥
कः कस्य स्वजनो को वा परोऽप्यस्ति भवाम्बुधौ ? । मत्स्या इव भ्रमन्त्यत्र मिलन्ति यान्ति दूरतः ॥ २५६ ॥
स्वकीयान् स्वजनान् त्यक्त्वा त्यक्त्वा गृहादि वैभवम् । परलोकं च हा ! यान्ति जीवाः पान्थिकदुःखिनः ॥
यस्योदरे भवेच्छूलं सैव दुःखेन पीड्यते । तथान्यैश्च कृतं कर्म कदाप्यन्यैर्न भुज्यते ॥ २५८ ॥
धर्मवृद्धिकरो ह्येवं भावोऽन्यत्वमुदाहृतः । अनन्यत्वे हि मोहस्य स्पष्टा वृद्धिर्निगद्यते ॥ २५९ ॥

१-हावो मुखविकारः स्याद् भावश्चित्तसमुद्भवः । विकारो नेत्रजो ज्ञेयो विभ्रमो भ्रूसमुद्भवः ॥

रौद्रार्त्तध्यानयोगेन कषायविषयादिभिः । बध्नन्त्यशुभकर्माणि केचित् द्व्यशीतिधाऽत्र हा ! ॥ २७३ ॥
आश्रवभावना लोके कर्मसंचयवारिका । आश्रवाज्जीवमाकृष्य नयति सांवरं पदम् ॥ २७४ ॥
आश्रवाणां निरोधेन संवरो द्विविधो भवेत् । सर्वतो देशतश्चापि तत्स्वरूपं निशम्यताम् ॥ २७५ ॥
अयोगिकेवलिष्वाद्यः सर्वतः संवरो भवेत् । द्वितीयः पुनरेक-द्वि-प्रभृत्याश्रवरोधिषु ॥ २७६ ॥
प्रत्येकमपि स द्वेधा द्रव्यभावतया मतः । श्रुत्वा भावे मनो देयं भावतः पारगो यतः ॥ २७७ ॥
कर्मणां पुद्गलादान-मात्मनि तस्य रोधनम् । सर्वतो देशतो यत्तद् द्रव्यतः संवरो मतः ॥ २७८ ॥
क्रियाया भवहेतुक्याः छेदनं सर्वदेशतः । आत्मनः शुद्धिकारी यत्-संवरो भावतो मतः ॥ २७९ ॥
संसेव्य संवरं जीवाः गता मुक्तिमहापुरीं । सेवध्वं संवरं तज्ज्ञाः ! सप्तपञ्चाशदात्मकम् ॥ २८० ॥
एवं शास्ति सदात्मानं भावनेयं गुणाकरा । सर्वेषां कर्मणां हन्त्री भाग्यशालिविभाविता ॥ २८१ ॥
तपसां द्वादश ख्याता भेदास्ते निर्जरा मता । यया स्वर्गापवर्गौ च समायातः स्वयंवरौ ॥ २८२ ॥
निर्जरा कारणं मुक्ते-र्जन्ममृत्युप्रहारिका । निर्जरा भावतो धार्या सा सकामा गुणावहा ॥ २८३ ॥
निर्जरां धारयित्वैव जज्ञिरे शिवगामुकाः । जिनास्ते निखिलास्तेन निर्जरां सन्निधौ कुरु ॥ २८४ ॥
विघ्नौघं नाशयत्येषा यथा ध्वान्तं रवेः कराः । अम्बुदं पवनो सर्पान् दुर्दान्तान् गरुडव्रजः ॥ २८५ ॥
कर्मणां मे क्षयो भूयादिति भावनया कृतम् । तपो द्वादशधा सा तु सकामा निर्जरा मता ॥ २८६ ॥

अकर्मभूमिजाश्चान्ये तथान्तर्द्वीपवर्तिनः । बुद्धिबलविहीना ये बोधिस्तेषां तु दुर्लभः ॥ ३०१ ॥
कुधर्माभिमुखाः केचित् सुधर्म न विदन्ति हा ! । बोधिलाभं लभन्ते न विधर्मग्रहपीडिताः ॥ ३०२ ॥
कुदेवाराधका ये स्युः कुत्सितागमवासिताः । कुलिङ्गधारिणो लोके बोधिहीना भ्रमन्ति ते ॥ ३०३ ॥
संसारशूकराः केचिद् धृष्टाः पण्डितमानिनः । विषयकर्दमे मग्ना दूरे तिष्ठन्ति बोधितः ॥ ३०४ ॥
आलस्योपहताः पापा अन्ये मोहेन मोहिताः । कषायविवशीभूता दूरे तिष्ठन्ति बोधितः ॥ ३०५ ॥
तीव्रमानहता अन्या-वर्णवादे रताः सदा । हारयन्ति नृजन्मापि तेषां बोधिः कुतो भवेत् ? ॥ ३०६ ॥
नागा इव कराला ये द्वेषाग्निपरिपूरिताः । हनिष्यामः स्वमन्यं वा तेषां धर्मः कुतो भवेत् ? ॥ ३०७ ॥
विषयेषु विलग्नानां मदिराऽऽसक्तचेतसाम् । मांसाद्यभक्ष्यरक्तानां निद्राध्वस्तमतिमतां ॥ ३०८ ॥
भक्तकथाप्रसक्तानां चौरदेशकथाकृताम् । विग्रहे बद्धचित्तानां बोधिलाभोऽस्ति दुर्लभः॥ ३०९ ॥ युग्मम्
शोकशल्ययुताः केचित् केचित्कार्पण्यदोषतः । भयतोऽपि लभन्ते न बोधिलाभं सुदुर्लभम् ॥ ३१० ॥
अज्ञानोपहता येऽत्र श्वेतं कृष्णं विदन्ति न। द्विपदा वृषभास्तेऽब्धौ बोधिहीना ब्रुडन्ति हा ! ॥ ३११ ॥
अन्येऽपि कौतुकाकीर्णा दिग्देशोद्यानकादिषु । प्रेक्षणगीतवाद्यानि शृण्वन्तः संचरन्ति ये ॥ ३१२ ॥
मन्त्रतन्त्रविधौ दक्षाः कुदर्शनकदाग्रहाः । कुहेतुभिर्विमूढा हा ! तेषां धर्मो न चेतसि ॥ ३१३ ॥
यथा कल्पार्कयोस्तर्वो-स्तरुत्वसदृशेऽपि हि । मिथोऽन्तरं महत्तद्वद्धर्मयोर्जैनजैनयोः ॥ ३१४ ॥

तत्प्रकाशो भवेत्तस्य सिद्धान्तस्यावगाहनात्। आच्छादितोऽस्ति सोऽप्यत्र मिथ्यावासितचेतसाम् ॥३२८॥
अतः प्रोक्तं मया चित्त! दुर्लभः परमेश्वरः। धर्मस्य कथको लोके पाकाभावे भवस्थितेः ॥ ३२९ ॥
मिलितः स महापुण्यात् सेव्यतां सेव्यतां सदा। सेवाप्राचुर्यतो भूयात् सुलभः स भवान्तरे ॥३३०॥ युग्मम्
तत्सेवा स्यात्तदुक्तानां तत्त्वानां श्रद्धया खलु। तज्ज्ञानेन तदाचारैः कुर्यात्सा तादृशं नरम् ॥ ३३१ ॥
भावनेयं भवेच्चित्ते यस्य दुर्गतिदारिका। सद्गतौ गामुकीभूय स्वल्पकालेन सिध्यति ॥ ३३२ ॥
भावनाभिर्यदेताभि-श्चित्तनैर्मल्यधारिणाम्। पिण्डस्थादि भवेद् ध्यानं तदा मुक्तिरवाप्यते ॥ ३३३ ॥
पिण्डस्थं च पदस्थं च रूपस्थं रूपवर्जितम्। ध्यानचतुष्टयं लोक आत्मभावविबोधकम् ॥ ३३४ ॥
पिण्डस्थं तद्भवेद्ध्यानं कायस्थः परमेश्वरः। निष्कर्मश्चिन्त्यते चित्ते ज्ञानवान् मुक्तिदो जिनः ॥ ३३५ ॥
अर्हन्मयानि हृत्पद्मे यानि मन्त्रपदानि च। चिन्त्यन्ते शशिशुभ्राणि तत्पदस्थं मतं बुधैः ॥ ३३६ ॥
समवसरणस्थो यो जिनः सप्रातिहार्यकः। तद्-बिम्बं चिन्त्यते चित्ते रूपस्थं तदुदीरितम् ॥ ३३७ ॥
ज्योतिश्चिन्मयरूपो हि सिद्धोऽमूर्तो निरञ्जनः। स्मर्यते ईश्वरो यत्र रूपातीतं प्रकीर्तितम् ॥ ३३८ ॥
एतच्चतुष्टयं ध्यायन् ध्याता ध्येयपदं व्रजेत्। कीटको भ्रमरीध्यानात् भ्रमरीत्वं यथाऽऽनुयात् ॥ ३३९ ॥

इति तत्त्वत्रयीवर्णनात्मकश्चतुर्थगुच्छकः समाप्तः



पञ्चमगुच्छकः ।

पूर्वोक्तशिक्षया चेतः ! यदा त्वं संयुतो भवेः । तदान्तरात्मभावेन योजितो हि भविष्यसि ॥ १ ॥
अन्तरात्मा निलीयेत परात्मनि पुनर्यदा । तेनैक्यं प्राप्य चात्मैव परमात्मत्वमाप्नुयात् ॥ २ ॥
निर्मथ्य घातिकर्माणि केवलज्योतिराप्य च । हस्तामलकवद्विश्वं पश्यति स चराचरम् ॥ ३ ॥
विलीनसकलक्लेशो घातिकर्मक्षये सति । सदेहः परमात्मापि विदेहसदृशो भवेत् ॥ ४ ॥
तीर्थकृत्कर्मवेदाय कर्मभेदाय देहिनाम् । देशनां स यकां दद्यात् तल्लेशोऽत्र विलिख्यते ॥ ५ ॥
सर्वेषां धर्मभेदानां सम्यक्त्वं प्रथमं मतम् । सुदेवे सुगुरौ शुद्ध-धर्मे श्रद्धानतो भवेत् ॥ ६ ॥
चारित्रज्ञानहीनोऽपि सम्यक्त्वी श्लाध्यते सदा । यतः सिध्यति सम्यक्त्वी ज्ञानचारित्रभृन्नहि ॥ ७ ॥
चिन्तामणिकामकुम्भ-कल्पवृक्षाधिकप्रदम् । सम्यक्त्वं तद्विना धर्म ऊपरे बीजवापवत् ॥ ८ ॥
अहिंसासत्यमस्तेय-ब्रह्मचर्यापरिग्रहाः । सम्यक्त्वसहिता एते नियमा मोक्षदायिनः ॥ ९ ॥
संयमस्य बलाऽभावे श्रावकाणां व्रतानि च । द्वादश गृहीतव्यानि सम्यक्त्वोचारपूर्वकम् ॥ १० ॥
स्थूलहिंसामृषास्तेयाऽब्रह्मतो विरतित्वतः । आद्यव्रतानि चत्वारि तेष्वाद्यानि भवन्ति हि ॥ ११ ॥
परिग्रहाणां संकोचे पञ्चमं व्रतमुच्यते । दिशां नियमने षष्ठं भोगोपभोगवर्जनम् ॥ १२ ॥

देशतः सप्तमं ज्ञेयमनर्थदंडवर्जनम् । अष्टमं नवमं चापि सामायिकव्रतं मतम् ॥ १३ ॥
देशावकाशिकं नाम दशमं व्रतमुच्यते । पर्वादौ पौषधं कृत्वा पाल्यमेकादशव्रतम् ॥ १४ ॥
अतिथिसंविभागेन क्रियते द्वादशव्रतम् । स्वर्गगा हि व्रतस्थाः स्युः पशवो व्रतवर्जिताः ॥ १५ ॥
महाव्रतानि लब्धानि न द्वादशव्रतानि च । सम्यक्त्वं येन नो लब्धं तस्य जन्म निरर्थकम् ॥ १६ ॥
जीवाजीवौ तथा पुण्यपापे चाश्रवसंवरौ । निर्जराबन्धमोक्षाश्च तत्त्वान्येवं मतानि हि ॥ १७ ॥
स्याद्वादसहितं तेषां नयनिक्षेपपूर्वकम् । यज्ज्ञानं तत्तु सम्यक्त्वं धर्माधारं प्रकीर्त्यते ॥ १८ ॥
तत्त्वज्ञानविहीनोऽपि तत्त्वश्रद्धानमात्रतः । सम्यक्त्वं लभते कश्चिन् माषतुषमुनीशवत् ॥ १९ ॥
सम्यक्त्वं विद्यते जीवे नवेति ज्ञायते कथम् ? । इति पृष्टे प्रभुर्ब्रूते जानीयात् पञ्चलिङ्गतः ॥ २० ॥
प्रभो ! तानि च कानि स्यु-स्तेषां व्याख्यापुरस्सरम् । स्वरूपं श्राव्यतां येन तच्छ्रुत्वा तीर्यते जगत् ॥ २१ ॥
प्रभुराह शृणु श्राद्ध ! पञ्चलिङ्गानि भावतः । शमसंवेगनिर्वेदाऽनुकम्पाऽऽस्तिक्यमेव च ॥ २२ ॥
तत्सद्भाग्यभरैर्लब्धमेकैकमपि दर्शनम् । लीनं च गमयत्येव तेन लिङ्गं प्रकीर्त्यते ॥ २३ ॥
मिथ्यात्वोपशमो ज्ञेयं लिङ्गमुपशमात्मकम् । चारित्रमोहनीयं यत् कषायाः कथिताः खलु ॥ २४ ॥
चतुर्विंशतिसत्कर्मा मिथ्यात्वं नान्यथाऽप्नुयात् । सकषाये च सम्यक्त्वं सास्वादनं कथं भवेत् ? ॥ २५ ॥
व्यवहारकरं लिङ्ग-मादिमानां शमो नहि । यतस्तुर्ये गुणे सन्ति द्वादशान्ये कषायकाः ॥ २६ ॥

भाषाकर्कशभावेन प्राणिहिंसादिभावतः। आदिमानां विशेषो न तेन लिङ्गं न तच्छमः
पक्षादिस्थितिभावेऽपि विशेषो न भविष्यति। अप्रत्याख्यानभाजां हि तिर्यग्गतिप्रसङ्गतः ॥ २७ ॥
सम्यक्त्वस्य कथं लाभो मिथ्यादृष्टेर्भविष्यति ? । यावज्जीवकषायाणा–मुदये तद्विचार्यताम् ॥ २८ ॥
प्रागबद्धायुषां लोके देशसाधुत्वधारिणाम्। भवेद् देवायुषोऽभावो मनुजायुः प्रसङ्गतः ॥ २९ ॥
अतत्त्वरुचिरूपो योऽसद्ग्रहः स तु नो भवेत्। अनन्तानां यतो मिथ्या–भावेन स प्रजायते ॥ ३० ॥
सूत्रार्थाद्विवियुक्ता या गीतार्थैश्च निवारिता। चेष्टा सा साध्नुयात् मिथ्या–भिनिवेशं स चान्यकत् ॥ ३१ ॥
तच्छमेनाऽनुमीयेत सम्यक्त्वं ज्ञानशालिनाम्। रञ्जनार्थं शमीभावः सम्यक्त्वगमको नहि ॥ ३२ ॥
कर्मवशेन संलग्नो विषये न विमुह्यति। त्यक्तुकामो हि सम्यक्त्वी तत्स्वरूपं विचिन्तति ॥ ३३ ॥
आपाते सुंदराश्चेमे विपाके विरसा हहा!। भवानुषङ्गिनश्चित्त! विषया दारुणास्ततः ॥ ३४ ॥
भोगकालेऽपि सन्ताप–हेतुकान् नरकप्रदान्। परिणामे धिगात्मंस्त्वं तादृशानपि सेवसे ॥ ३५ ॥
स्रवद्बीभत्सके देहे रमन्ते कुत्सनीयके। कृमिवद्व्याकुला जीवा दुःखेषु सुखबुद्धयः ॥ ३६ ॥
" उत्तानोच्छूनमण्डूक–पाटितोदरसन्निभे। क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ? " ॥ ३७ ॥
" नग्नः प्रेत इवाविष्टः क्वणन्तीमुपगुह्य ताम्। खेदायासितसर्वाङ्गः सुखी स रमते किल " ॥ ३८ ॥
विषयाणां कृते जीवो दुःखशतनिबन्धनम्। महारम्भं समाश्रित्य भूरिपापानि चाश्रितः ॥ ३९ ॥
॥ ४० ॥

ततो निरयदुःखानि तिर्यग्दुःखानि सोढवान् । विषया दुःखदास्तस्मान् मार्जिता[1]-पानवज्ज्वरे ॥ ४१ ॥
विषयाः सुखदाश्चेत्स्यु-स्तीर्थकृच्चक्रवर्तिनः । उत्तिष्ठेरन् कथं त्यागे तेषां भूरिषु तेष्वपि ? ॥ ४२ ॥
विषयाशावशीभूता विप्रमुक्ताश्च तैरपि । परिभ्रमन्ति संसारे घोरे कण्डरिको यथा ॥ ४३ ॥
अलं तद्विषयैरेतै-रद्य त्यक्ष्यामि श्वोऽथवा । यत्तात्त्विकं भवेन्नान्य-च्छर्म श्रीमोक्षशर्मणः ॥ ४४ ॥
अक्षयाक्लेशसंसिद्ध-मलज्जनीयमद्भुतम् । प्राशमिकं सुखं तस्मा-दप्यनन्तगुणं हि तत् ॥ ४५ ॥
अपरायत्तमौत्सुक्य-रहितं निष्प्रतिक्रियम् । सुखं स्वाभाविकं तत्र नित्यं भयविवर्जितम् ॥ ४६ ॥
" परमानन्दरूपं तद् गीयतेऽन्यैर्विचक्षणैः । इत्थं सकलकल्याण-रूपत्वात् साम्प्रतं ह्यदः " ॥ ४७ ॥
तस्माद् महाव्रते मोक्ष-साधके येऽत्र सोद्यमाः । परार्थसाधका धन्याः साधवस्ते भुवस्तले ॥ ४८ ॥
निर्वाणदायकान् योगान् साधयन्तीति साधवः । समा वा सर्वभूतेषु ये स्युस्ते भावसाधवः ॥ ४९ ॥
रुद्धाश्रवास्तपोयुक्ता लग्नाः शुभक्रियासु ये । नीरागास्ते सदा धीराः साधवो भवनाशकाः ॥ ५० ॥
कदा स दिवसो भावी गीतार्थगुरुहस्ततः । ग्रहीष्यामि सुचारित्रं विहरिष्यामि भावतः ॥ ५१ ॥
इन्द्रियार्थेषु संसक्तं धिग् धिग् मां पापिनं च हा ! । दारादिषु सदा रक्तं वस्तुतो वैरिकेषु हि ॥ ५२ ॥
एवं प्रवर्तमानोऽपि भावतो मोक्तुमिच्छति । विषयेभ्यो निजात्मानं स्वदोषज्ञो व्रतिप्रियः ॥ ५३ ॥

१ 'मार्जिता' शीखंड इति लोकभाषायाम् ।

व्याधिभिर्व्याकुलो नित्यं दारिद्र्यदुःखपूरितः । प्रियाणां विप्रयोगेन दुःखार्णवे निमज्जति ॥ ६८ ॥
अप्रिययोगतश्चित्ते यः संतापः प्रजायते । कथनं तत्स्वरूपस्य केवलिनैव पार्यते ॥ ६९ ॥
पृथ्वीकाये यदा देवः स्वोत्पत्तिं किल पश्यति । यत्तदा जायते दुःखं केवलिनैव ज्ञायते ॥ ७० ॥
एवं समस्तसंसारे यानि दुःखानि तानि च । भविष्यज्जन्मभावीनि रमन्ते तस्य चेतसि ॥ ७१ ॥
देवेन्द्रचक्रवर्तित्वा-दिपदमध्रुवं सदा । आभाति तस्य चित्ते हि बालौघधूलिधामवत् ॥ ७२ ॥
तत्सावद्योद्यमं यत्र करोति तत्र ताम्यति । सर्वसावद्यसंयोगं मुमुक्षुरपि नाऽऽप्नुयात् ॥ ७३ ॥
त्यक्तसंसारदुःखौघान् स साधून् बहु मन्यते । सच्चारित्रं विना नैव हर्षस्थानं क्वचिद्व्रजेत् ॥ ७४ ॥
एवं भावयतश्चित्ते बाह्यतोऽपि प्रवर्तनात् । निर्वेदो लक्ष्यते लिङ्गं सम्यक्त्वस्य प्रसाधकम् ॥ ७५ ॥
अनुकम्पापरो जीवे सम्यग्दृष्टिः सदा भवेत् । अन्यदुःखप्रहाणेच्छा तच्चित्ते च विजृम्भते ॥ ७६ ॥
तेषां दुःखविनाशे हि कारणं जैनशासनम् । मिथ्यात्वरोगव्याप्तानां तत्परिणम्यते कथम् ? ॥ ७७ ॥
रम्यं जिनेश्वरस्यात्र मन्दिरं चेद् विरच्यते । न्यायद्रव्येण तद्दृष्ट्वा बोधिलाभो भवेत् ध्रुवम् ॥ ७८ ॥
कारयामि प्रभोर्बिम्बं दृष्ट्वा यन्मन्यते जनः । सर्वदेवाधिदेवोऽयं केनैवं पूज्यतेऽन्यथा ? ॥ ७९ ॥
मुद्राऽप्यलौकिकी तस्या-न्यदेवेभ्योऽतिरिच्यते । गुणिनो दर्शनादेव दर्शको गुणमाप्नुयात् ॥ ८० ॥
रागद्वेषयुतान्येषां स्पष्टा मुद्रा विलोक्यते । वीतरागः सुदेवोऽय-मेवं बोधिमवाप्नुयात् ॥ ८१ ॥

पञ्चम-
गुच्छके
सम्यक्त्व-
लिङ्ग
वर्णनम् ॥

तपोभिर्निर्जरा सर्व-वादिनां खलु सम्मता । अन्यथा तत्क्रिया नैव क्रियावादिषु युज्यते ॥ ९६ ॥
मिथ्यात्वादिनिमित्तोऽत्र बन्धः स्यात् कथमन्यथा । संसारमोक्षरूपे द्वे व्यवस्थे भवतो भुवि ॥ ९७ ॥
अनादिसिद्धयोगे तु संगतिर्नैव जायते । बद्धोऽन्यो मोक्ष्यतेऽन्यश्च क्षणवादेऽपि सा नहि ॥ ९८ ॥
बध्यते प्रकृतिर्जीवो मुच्यते नेति संगतम् । पुनरागमनं कस्मात् क्षये निःशेषकर्मणाम् ? ॥ ९९ ॥
प्रबुद्धा विरताः सन्तो रक्षन्ति सर्वप्राणिनः । अनुकम्पा ततस्तस्य तदारम्भेऽपि विद्यते ॥१००॥
शकटपोतसङ्ग्राम-हलाद्यारम्भजं तु यत् । महत्पापं विजानाना व्याख्यां कुर्युस्तदस्य न ॥१०१॥
मन्त्रे तन्त्रे तथा ज्योतिःशास्त्रे निष्णातबुद्धयः । तदाख्यानं न कुर्वीरन् यतो हिंसा प्रजायते ॥१०२॥
दानारम्भोऽपि नो तस्य कुपात्राय भवेत् कदा । अनुकम्पयतो जीवान् गृहगस्य ददाति च ॥१०३॥
विचाराद्वर्तनाच्चैव-मनुकम्पा प्रसिद्ध्यति । लिङ्गं लीनं च सम्यक्त्वं गमयेत् क्षणमात्रतः ॥१०४॥
यथार्थबोधवान् वेत्ति जीवो सम्यक्त्वदृष्टिकः । पारलोकमनुष्ठानं विना जीवं घटेत न ॥१०५॥
विज्ञानक्षणवादेऽत्र कृतनाशोऽकृतागमः । उदयानन्तरे नाशे कर्तरि भोक्तृता नहि ॥१०६॥
सन्तानो वस्तुतो नास्त्य-चेतनाचेतनं कथम् ? । सहकारित्वं भवेन्नैवो-पादानमन्तरा क्वचित् ॥१०७॥
प्रभवा पुण्यपापाभ्यां संवित्तिः सुखदुःखयो । ज्ञानं भिन्नं ततो नैव संवित्तिः सुखदुःखयोः ॥१०८॥
प्रतिदेहं विभिन्नोऽय-मात्मा सांकर्यमन्यथा । पुण्ये पापे सुखे दुःखे भवेन्मोक्षे भवेऽपि च ॥१०९॥

संकोचेन विकाशेन संगतो देहव्यापकः । अन्यथा चान्यदेहेन समे योगे कथं पृथग् ? ॥११०॥
निजपक्षनिराकारा-देति मुक्तिं गतोऽपि द्राग् । एतन्न संगतं यस्मात् निर्निमित्तो भवो न हि ॥१११॥
निर्हेतुको हि संसारो भवेन्न नियतावधिः । नित्यजीवस्वभावात्मा मोक्षस्तु कर्मणां क्षये ॥११२॥
वस्तुस्वभावतो देह-त्रिभागोनः प्रमाणतः । सर्वोपरि हि लोकान्ते कर्ममुक्तः प्रतिष्ठति ॥११३॥
अनन्तज्ञेयज्ञानी स्याज्जीवः कर्मयुतो नहि । तत्कर्माणि विनाश्यात्र सर्वज्ञस्तत्र तिष्ठति ॥११४॥
म्लेच्छार्यवैष्णवादीनां कुतर्कैर्नैव मुह्यति । यतो हालाहलं तेषां स्पष्टं तत्त्वेषु विद्यते ॥११५॥
जिनेन्द्रमतभिन्नेषु युक्तिस्तत्त्वानुगा क्वचित् । लक्ष्यते सा तु जैनेन्द्र-सारमादाय निर्मिता ॥११६॥
आत्मकर्मप्रभूणां या भवमोक्षस्वरूपयोः । व्यवस्था शासने जैने सैव सत्येति मन्यते ॥११७॥
यत्सूक्ष्मादपि सूक्ष्मं च तत्त्वं जिनेश्वरोदितम् । तदपि सत्यमेवास्ति यद्वक्ता रागवान् नहि ॥११८॥
इत्यादि भावनायुक्त आस्तिकत्वं प्रसिध्यति । प्रसिध्यत् साधयेत् लिङ्गं सम्यक्त्वस्य हि पञ्चमम् ॥११९॥
भक्तः श्रुत्वा पुनः प्राह सम्यक्त्वान्न परो मणिः । तद्रक्षणे प्रभो ! ख्याहि कृपया साधनानि च ॥१२०॥
प्रभुराहाथ भो भद्र ! सप्तषष्टिप्रकारतः । सम्यक्त्वरक्षणं भूयात् श्रुत्वा तानवधार्यताम् ॥१२१॥
श्रद्धानानि च चत्वारि तावत् परमार्थसंस्तवः । गीतार्थसेवनं नष्ट-दर्शनानां विवर्जनम् ॥१२२॥
पाखण्डिकानां सर्वेषा-मनासङ्गश्च ज्ञाततः । अभयपुष्पचूलाद्य-निह्नवगणभृत् क्रमात् ॥१२३॥

शुश्रूषा जिनवाक्यानां धर्मे रागस्तदुक्तिगे । वैयावृत्त्यं मुनौ प्रोक्तं त्रिधा लिङ्गं महर्षिभिः ॥१२४॥
धर्मरागे चिलातीजः शुश्रूषायां सुदर्शनः । वैयावृत्त्ये तथा नन्दि-षेणो योज्यो निदर्शने ॥१२५॥
अर्हत्सिद्धे गुरौ चैत्ये विनयः श्रुतधर्मयोः । श्रीसंघदर्शनाचार्यो-पाध्यायेष्वपि सर्वदा ॥१२६॥
एवं दशविधः कार्यो विनयो दृष्टिरक्षणे । आशातनापरित्यागो भुवनोऽत्र निदर्शनम् ॥ युग्मम् ॥१२७॥
सम्यक्त्वस्य भवेच्छुद्धिः करणानां विशुद्धितः । एता विशुद्धयस्तिस्रो रक्षन्ति दर्शनं सदा ॥१२८॥
सदा जिनमते प्रीतिर्विशुद्धिर्मनसो मता । अनुसृत्यागमं वाचा प्रयुक्ता वचसां च सा ॥१२९॥
प्राणत्यागेऽपि यो नैव जिनादन्यं नमेत् कदा । कायशुद्धिर्मता तस्य झटिति भवपारदा ॥१३०॥
जयसेना कालिकाचार्यो वज्रकर्णस्तृतीयकः । मनोवाक्काययोगेषु योजनीया निदर्शने ॥१३१॥
शङ्का कांक्षा विचिकित्सा श्लाघा मिथ्यात्विनां तथा । तेषां परिचयस्त्याज्यः सम्यक्त्वं दूषयन्ति यत् ॥१३२॥
पेयापो जितशत्रुश्च दुर्गन्धा श्रेणिकप्रिया । सुमतिः-ऋषिदत्ता च ज्ञातानि सन्ति दूषणे ॥१३३॥
सिद्धान्ती धर्ममाख्याता वादी नैमित्तिकस्तथा । तपस्व्यनेकविद्याभृत् सिद्धः कविः प्रभावकाः ॥१३४॥
दशपूर्वी वज्रः[2] सूरिर्मल्लवादी विचक्षणः । भद्रबाहुर्मुनिर्विष्णु हेमचन्द्रो मुनीश्वरः ॥१३५॥
पादलिप्तस्तथा बप्प-भट्टिश्चैते प्रभावकाः । अनुक्रमेण विज्ञेयाः सम्यग्मार्गस्य सर्वदा ॥१३६॥

१ भुवनतिलकेति । २ आद्ययोरुभयोरेक एव दृष्टान्तः ।

जैनधर्मतरोर्मूलं द्वारं शिवपुरस्य च । धर्मप्रासादपीठं चाऽऽधारोऽस्ति विनयादिषु ॥१५०॥
सार्वधर्मसुधाया हि भाजनं निधिरुच्यते । ज्ञानादिभावरत्नानां चिन्तयेद्विक्रमो यथा ॥१५१॥
सार्वानुभवसिद्धात्माऽनुमीयेत कथञ्चन । ज्ञायेत सुखदुःखादि-लिङ्गैः सत्तात्मको हि सः ॥१५२॥
प्रथमं गीयते स्थानं द्वितीयं द्रव्यनित्यता । पर्यायपक्षतोऽनित्यो ज्ञातं श्रीगौतमप्रभुः ॥ युग्मम् ॥१५३॥
करोति सर्वकर्माणि हेतुभिः कुम्भकृद् यथा । व्यवहारेण कर्त्तात्मा कर्तृकं तत्तृतीयकम् ॥१५४॥
भुङ्क्ते कृतानि कर्माणि स्वयं तद् भोक्तृकं मतम् । चतुर्थ दर्शने स्थान-मग्निभूतिर्निदर्शनम् ॥ १५५ ॥
सर्वकर्मक्षये भूया-न्निर्वाणाख्यं च पञ्चमम् । त्रिलोकीशर्म यस्याग्रे तिलतुषमितं नहि ॥ १५६ ॥
ज्ञानादिकत्रिकं शास्त्रे मोक्षोपायः प्रकीर्त्यते । तत्तु सम्यक्त्वरत्नस्य षष्ठं स्थानं विभावयेत् ॥ १५७ ॥
प्रभासगणभृज्ज्ञातमस्मिन्नर्थेऽस्ति ख्यातिमत् । सप्तषष्टिप्रभेदैः स्या-देवं सम्यक्त्वरक्षणम् ॥ १५८ ॥
केचिन्महाव्रतान्येवाऽणुव्रतानि च केचन । जगृहिरे च सम्यक्त्वं केचित्तदुपदेशतः ॥ १५९ ॥
उपकारमिति कृत्वा प्राणिनामुपदेशतः । शैलेशीकरणध्वस्ता-शेषकर्मा विभुस्ततः ॥ १६० ॥
देहं विहाय सर्वाधि-व्याध्युपाधिविकाशकम् । समश्रेणिंगतिं कृत्वाऽस्पृष्टः स शिवगोऽजनि ॥युग्मम्॥१६१॥
सम्पूर्ण जगतां सौख्यं गृह्यते सर्वकालिकम् । न यात्यनन्तभागेन मुक्तिसौख्यस्य तुल्यताम् ॥ १६२ ॥
तत्प्रमादं परित्यज्य सामग्रीं मानवादिकाम् । सच्छास्त्राभ्यासतो योगान्निरुध्य सफलीकुरु ॥ १६३ ॥

युगप्रधानः प्रथितः पृथिव्यां समस्तपापप्रतिहारकारी ।
ज्ञानादिभावे सततं विहारी जीयाद्यशोभद्रमुनीश्वरस्स ॥ ४ ॥
श्रीभद्रबाहुः परमोपकारी निर्युक्तयो येन विनिर्मितास्ताः ।
श्रीस्थूलभद्रो मुनिवाचनाभिः प्रपाठितस्स प्रमुदं तनोतु ॥ ५ ॥
एवं क्रमेणैव युगाब्धिपट्टे महातपस्वी तपसः प्रभावात् ।
तपोगणोत्पत्तिकरः स जीयात् सूरिर्जगच्चन्द्र इह प्रभुर्नः ॥ ६ ॥
समस्तपंचालमहीप्रदेशे जिनेन्द्रधर्मस्य विकाशकारी ।
आनन्दसूरिः प्रबभूव तस्मिन् गच्छे नभस्सूर्य इव प्रतापी ॥ ७ ॥
तत्पट्टपूर्वाचलभानुरेष गुणानुरागी कमलाख्यसूरिः ।
नानानरेशप्रतिबोधदाता बोधेर्विधाता हृदये ममास्तु ॥ ८ ॥
तदीयपट्टाम्बरपूर्णचन्द्रः कराष्टनन्देन्दुमिते सुवर्षे ।
श्रीलब्धिसूरिर्नगरीवुहार्यां विनिर्ममे ग्रन्थमिमं मनोज्ञम् ॥ ९ ॥



इति सद्धर्म्मोद्धारक न्यायांभोनिधि जैनाचार्य्य श्रीमद्विजयानन्दसूरिपुरन्दरपट्टप्रभावक
सद्धर्म्मरक्षकसर्वजनमान्याचार्य्यप्रवरश्रीमद्विजयकमलसूरीश्वरान्तिपज्जैनरत्न
व्याख्यानवाचसपत्याख्यविरुदधारकआचार्यपुङ्गवश्रीमद्विजयलब्धिसूरि
विरचितो वैराग्यरसमञ्जर्यभिधानोऽयं

**ग्रन्थः समाप्तः**

# श्री लब्धिसूरीश्वर जैनग्रन्थमाला ।



| | | | |
|---|---|---|---|
| १ | जनव्रतविधिसंग्रह | ( सुधारावधारा साथे बीजी आवृत्ति ) | ०-८-० |
| २ | हीरप्रश्नोत्तराणि | ( कीर्तिविजयगणिसमुच्चितानि ) | ०-१२-० |
| ३ | श्रीपालचरित्रम् | ( पण्डितसत्यराजगणिकृतम् ) | ०-०-० |
| ४ | तत्त्वन्यायविभाकरः | ( श्रीमद्विजयलब्धिसूरीश्वरप्रणीत ) | ०-८-० |
| ५ | पंचसूत्रम् | ( हरिभद्राचार्यकृतटीकोपेतम् ) | ०-०-० |
| ६ | हरिश्चंद्रकथानकम् | ( भावदेवसूरिविहीतम् ) | ०-०-० |
| ७ | वैराग्यरसमंजरी | ( श्रीमद्विजयलब्धिसूरीश्वरप्रणीता ) | ०-२-० |
| ८ | चैत्यवंदनचतुर्विंशतिः | ( श्रीमद्विजयलब्धिसूरीश्वरप्रणीता ) | ०-०-० |
| ९ | कविकुलकीरीट | ( गुर्जरभाषायामपूर्वोयं ग्रन्थः ) | प्रेस |
| १० | मूर्तिमंडन | ( जैनादिमतेषुमूर्तिपूजानियामकः ) | प्रेस |
| ११ | आरंभसिद्धि | ( हेमहंसगणिकृतटीकोपेता ) | प्रेस |